॥ श्रीः ॥

( व्याकरण )

# पूर्वपक्षावली ।



PUBLISHED BY H. D. GUPTA & SONS. PROPRIETORS,
THE CHOWKHAMBA SANSKRIT BOOK DEPOT.

BENARES CITY.

*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press.*

BENARES.

---

1911

पूर्वपक्षावल्याः

# सूचीपत्रम् ।

इति पूर्वपक्षावलि सूचिपत्रम्

# श्रीगणेशाय नमः ।

## अथ पूर्वपक्षावलि प्रारम्भः ॥

यत्तु धातोस्तन्निमित्तस्यैवेति सूत्रे यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेशस्तर्हि तन्निमित्तस्यैवेति सूत्रार्थः । नियमार्थमिदं सूत्रं । लव्यादौ वान्तो यि प्रत्यये इत्यनेनैव सिद्धत्वादिति । एवकारग्रहणं विपरीतनियमबाधनार्थम् । अन्यथा यादौ प्रत्यये एचश्चेद्वान्तादेशस्तर्हि धातोरेवेति नियमस्स्यात् तथा सति बाभ्रव्यमित्यादौ वान्तादेशो न स्यात् अत्र मधुबभ्रोर्ब्राह्मणकौशिकयोरित्यनेन यञ्प्रत्ययः । अत्रोच्यते इदं सूत्रं यादिप्रत्ययनिमित्तकस्यैवैचो वान्तादेशप्रवृत्त्यर्थमिति फलितम् । तेन ओयते औयतइत्यादौ न वान्तादेशः आङ्पूर्वाद्वेञः कर्म्मणि लटि यकि च वचिस्वपियजादीनामिति संप्रसारणे पूर्वरूपे ओयते इति रूपं तस्यैव धातोः कर्म्मणि लङि औयतइति रूपम् किं धातोस्तन्निमित्तस्यैवेति सूत्रेणेति अत्र हि वान्तादेशनिवृत्त्यर्थं न यकीत्येवसूत्रमस्तु यकि परे एव वान्तादेशो नेन्यथेतिसिद्धम् ओयते औयतइति तु कुबुद्धिकल्पनम् । न च गोशब्दादाचार क्विपि गोषु साधुः यति गोयमित्यत्रापि वान्तादेशप्रसङ्गः यक्परत्वाभावेन न यकीति निषेधापत्तेः । सूत्रमते तु न भवति यादिप्रत्ययनिमित्तकत्वाभावादितिवाच्यम् नैव संध्यक्षरमन्त्यमस्तीति इकोगुणवृद्धीति वदव्रजेति सूत्रस्थभाष्यप्रामाण्यात् "ओतः श्यनि" "आदेच उपदेशेऽशिती"ति सूत्रभाष्यप्रामाण्यात् एजन्तो

ऽथ आचारक्विपो ऽनभिधानमेव एवञ्च गोयमित्यस्यासाधुत्वमेव अथापि भूधातोरन्येभ्यो ऽपि दृश्यते इति विचि कीलालप आगतमिति भाष्यप्रामाण्येन लोके ऽपि क्व चिद्विचो लाभेन भूधातोर्विचि तन्निमित्ते गुणे कृते भो इति रूपं तस्मात्साध्वर्थे तत्र साधुरिति यति भोयमिति भविष्यति तन्न स्यादिति यथा कथञ्चित् अन्यत्समाधानं जनानवतीति जनौः तस्मात्साध्वर्थे यति जनौयमिदम् दुरुद्धरदूषणं बोध्यमिति अतो ऽन्यत्समाधाने विभावयन्तु सुधिय इत्याहुः । अत्रोच्यते यिप्रत्यय इतिशब्दाध्याहारे निमित्तत्वं सप्तम्यर्थस्तद्योतकन्तु तन्निमित्तस्यैवेति नापूर्व्वं बालबोधनार्थं ततश्च यादिप्रत्ययनिमित्तकस्य धातोरेचो वान्तादेशविधानादिष्टं सिध्यति सप्तम्यर्थस्यनिमित्तत्वार्थाभावे ओयते औयतइति प्रत्युदाहरणम् । किञ्च वान्तो यि प्रत्यस्ये तु गोपयसोर्यत् इति तद्धिते तु सुबन्तात्प्रातिपदिकाद्वा तद्धितविधानमिद्धो व्यादौ नामविषयत्वमेव वान्तो यि प्रत्ययस्य भाष्याल्लभ्यते न तु धातुविषयत्वं ततश्च धातोरित्यारब्धमृषिणा एवञ्च किं न यक्रीत्यादिनिषेधादिति गोयं भोयमित्यादीनामनभिधानादसाधुत्ववर्णनं शङ्कनीयमत्रमशुद्धमेवेति भाष्यविज्ञाः पण्डिताः वदन्ति ॥ यत्तु असिद्धं बहिरङ्गमन्तरङ्गे अस्याश्च"वाहऊठ इति सूत्रस्थोठ्ग्रहणं ज्ञापकम् । अन्यथा वसोः संप्रसारणमिति सूत्रात्संप्रसारणपदानुवृत्त्या वाहेत्यत्र वस्य संप्रसारणे पूर्व्वे रूपे तन्निमित्तके लघूपधगुणे कृते वृद्धिरेचीति वृद्धौ सिद्धं विश्वौहः विश्वौहेत्यादीति शेखरग्रन्थसिद्धान्तः । अत्रापूर्व्वाशङ्का केन चिदुद्भाव्यते ऊठो ऽकरणे यद्यपि न रूपासिद्धिर्दोषः तथापि स्वरासिद्धिर्दोषः स्यादेव प्रौहः प्रौढेत्यादौ ऊठिदंपदाद्यप्पुमरैः द्युभ्यः ऊठादिभ्यः

परा या ऽसर्वनामस्थानविभक्तिः सा उदात्ता स्यादिति तस्यार्थः । एवञ्च ऊठो ऽकरणे कथं तन्निमित्तको विभक्त्युदात्तः ऊठः स्थाने संप्रसारणपदकरणे तु यूनः यूना इत्यादावतिव्याप्तिः तस्मादयुक्तो भाष्यादिग्रन्थः । अत्रोच्यते ऊठिदंपदादिति सूत्रे वविदंपदादित्यस्तु उश्च उश्च अनयोः समाहारः उ च वाश्च वौ लोपो व्योरिति वलोपः अवादेशः वविदं पदादिति तथा च व्यञ्जनमात्रस्य स्थाने यो दीर्घ ऊकारः वाइत्यस्य स्थाने यो ह्रस्वउकारः ततः परा या ऽसर्व्वनामस्थानविभक्तिः सा उदात्ता स्यात् आद्योदाहरणन्तु जूरः जूरा ज्वरेत्यूठ् द्वितीयस्योदाहरणन्तु विश्वौहः विश्वौहेति यथा कथञ्चित् । केचित्तु ऊठ्ग्रहणं परिभाषाज्ञापकमित्रस्य दीर्घोच्चारणं ज्ञापकमित्यर्थः । संप्रसारणमूठि कृते ण्विनिमित्तके गुणे कृते वृद्धिरेचीति वृद्धौ सिद्धं विश्वौहः इत्यादि ऊठिदंपदादित्यत्र उविदंपदादितिन्यासेन जूरः जूरा विश्वौहः विश्वौहेत्यत्र च स्वरसिद्धिरिति समाधानं कुर्वन्ति ॥ विभक्तिश्च सुप्तिङौ विभक्तिसंज्ञौ स्तः संज्ञाप्रदेशा न विभक्तौतुस्मा इत्यादयः अत्रोच्यते विभक्तिश्चेतिसूत्रं मास्तु न विभक्तावित्यत्र सुप्तिङावेवास्तु अष्टन आविभक्ताइत्यादिविभक्तिपदघटितसूत्रे सुब्ग्रहणमेवास्तु त्यदादीनाम इत्यत्र सुपीत्यनुवृत्त्यैव सिद्धेः । न च त्यदादीनाम इत्यत्र सुप्ग्रहणे यत्र तत्रे त्यादौ प्राग्दिशीये अत्वानापत्तिरिति वाच्यम् । तेनापि सुप्सञ्ज्ञाया एव विधानात् न च सुप्संज्ञायाम् एतर्हि तत्रेत्यादौ सुपि चेति दीर्घापत्तिरितिवाच्यम् । सुपि चेत्यत्र यभीति न्यासेन निर्वाहात् भादौ यादौ सुपीति तदर्थात् न च यत्र तत्रेत्यादौ सुपो धात्विति त्रादेर्लुगापत्तिः इदानीं तदानीमित्यादौ अनुदात्तौ सुप्पिताविति अनुदात्तता च स्यादिति

वाच्यम्। तत्र तसिलादीनां विधानसामर्थ्येन लुगनापत्तेः त्र-
लादिलित्करणेन प्राग्देशीये अनुदात्तौ सुप्पिताविति अस्यापवृत्ति-
रिति विभावयन्तु समाधानं शाब्दिकाः। घुणघूर्णभ्रमणे दीर्घो-
च्चारणं प्रक्रियालाघवाय अन्यथा कुर्दादिवदुपधायां चेत्यनेनैव
दीर्घसिद्धेः इति शेखरग्रन्थः अत्र केचिच्छङ्कते ऽयुक्तो ऽयं शेख-
रग्रन्थः दीर्घोच्चारणं न केवलं प्रक्रियालाघवार्थमेव यत्रोपधायां
चेत्यस्याप्राप्तिस्तत्र दीर्घोच्चारणस्य सार्थक्यात् घूर्णधातोर्वनि-
पि विड्वनोरनुनासिकः स्यात् अनेन णकारस्यात्वे हल्पर-
रेफपरत्वाभावेन उपधायाञ्चेत्यस्याप्रवृत्त्या घूगावा ब्राह्मणी-
त्यत्र दीर्घोच्चारणस्य साफल्यादितिदूषणाऽभासः वस्तुतस्तु
अन्तरङ्गत्वादात्वात्प्रागेव दीर्घे न काप्यनुपपत्तिरित्याहुस्तन्न घू-
रावा ब्राह्मणीत्यस्यानभिधानमेवेति नागेशाऽभिप्रायः अन्वा-
ख्यानप्रक्रियालाघवे सति कथमेव घूर्णपाठ नापि हानिः नात्र
छिद्रान्वेषणे प्रवेशः इत्यवेहि॥ षात्पदान्तात् षकारात्परस्य
नस्य णत्वन्न स्यादिति सूत्रार्थः। निष्पानं सर्पिष्पानमित्याद्युदा-
हरणं कृत्यचइति भावकर्मणोरिति च प्राप्तं णत्वं प्रतिषिध्यते
अत्र सूत्रे पदात्किम् पुष्णातीति प्रत्युदाहरणम्। अत्र रषाभ्या-
मितिणत्वस्य प्रतिषेधः स्यादिति मनोरमाग्रन्थः अत्रेयमाशङ्का
पुष्णातीत्यत्र णत्वप्रतिषेधे ऽपि ष्टुत्वेन रूपासिद्धेरिति व्यर्थमेव
पदान्तग्रहणमिति। तत्रोच्यते रषाभ्यामिति सूत्रे भाष्ये उक्तम्
षग्रहणमुत्तरार्थम् षात्परस्य नस्य ष्टुत्वेन निर्वाहात् एवञ्च षा-
त्पदान्तादित्यनेनापि ष्टुत्वस्यैव निषेधः एवञ्च पादान्तग्रहणा-
भावे पुष्णातीत्यत्र ष्टुत्वनिषेधे रूपासिद्धिः स्पष्टैवेति समाधाः
नम् ददातिदधात्योर्विभाषा आभ्यां शः स्यात् ददः दधः दा-
धाभ्यां शपि जुहोत्यादित्वाच्छपः श्लौ द्वित्वे आतोलोपे सिद्धम्

नमिति सिद्धम् । न ह्यत्र तद्धितग्रहणमन्तरा इकारनिवृत्तिरूपं फलम् इति मनोरमादिग्रन्थे प्रयोजनमुक्तम् । तत्सर्वं यथाश्रुतन्यासे । वस्तुतस्तु प्राचां ष्फडित्येव सूत्रमस्तु तत्र षित्वात् ङीष्सिद्धिः डित्वं तु क्वचिदन्यतोऽपि ज्ञापयति तेन आसुरेति सिद्धम् । न च प्रातिपदिकसंज्ञार्थं तद्धितग्रहणमावश्यकमिति वाच्यम् । षित्वसामर्थ्यादप्रातिपदिकत्वेऽपि ङीष् भवतीति ज्ञापनात् । न च गौकक्ष्यायणीति रूपासिद्धिः गोकक्षशब्दो गर्गादिः तेन यञ् तदन्तात् क्रोड्यादिभ्यश्चेति ष्यङ् ततः यङश्चाबिति चाप् गौकक्ष्या ततः ष्फप्रत्यये विवक्षिते भस्याढे इति पुंवद्भावः तेन ष्यङ्चापोर्निवृत्तिः फस्यायनादेशः षित्वात् ङीष् गौकक्ष्यायणीतिरूपं सिद्धम् । एतच्च तद्धिते ग्रहणे सत्येव सङ्गच्छते अन्यथा पुंवद्भावाप्रवृत्तौ यङन्तत्वाभावेन ष्फो न स्यात् इति केचित्समाधानमूचुः तन्न । भाष्ये गौकक्ष्याशब्दस्य क्रोड्यादिषु पाठः प्रत्याख्यातः गौकक्ष्याइति रूपासिद्धिस्तु यङश्चाबित्यस्याप्रवृत्तावपि षाद्यञश्चाप् वाच्य इति वार्त्तिकेन चाप् तेन गौकक्ष्यायणीति । न च ष्फप्रत्ययस्य बाधादिति रूपासिद्धिः वाच्यम् । प्राचां ष्फेति सूत्रे सर्वत्र लोहितादिकतन्तेभ्य इति सूत्रात् सर्वत्र ग्रहणमनुवर्त्तते तच्च क्वचिद्बाधकविषयेऽपि प्रवृत्त्यर्थम् गौकक्ष्याइति प्राचां मते । एवञ्च गोकक्ष्याया प्रतिषेधो वक्तव्यः इति सम्प्रसारणनिषेधवार्तिकमपि नारम्भणीयमित्यपरमपि लाघवम् । अत्र समाधानं विभावयन्तु सुधियः ॥ नञ्स्नञीकक्ख्युन् अत्र तरुणतलुनयोः प्रथमवयोवाचकता भावात् वयसि प्रथमे इत्यस्याप्राप्ते वार्तिके तयोरुपादान, न च वयस्यचरमइति वार्तिकेन ङीप्सिद्धेः पुनस्तयोर्ग्रहणं व्यर्थमिति वाच्यम् । तरुणतलुनयोर्गौरादिगणे पाठेन तत्सामर्थ्यात् ङीपो ङीपो

बाधो माभूदिति वार्तिके तयोरुपादानात् ङीपूङीपोस्तु स्वरे भेद इति मनोरमाशेखरादावुक्तम् तत्र मास्तु तरुणतलुनयोर्ग्रहणम् वार्तिके गौरादिपाठो ऽपि मास्तु बह्वादौ तरुणतलुनयोः पाठः कार्यः तेन बाह्वादिभ्यश्चेति ङीष् तदभावे ऽपि वयस्यचरमइतिङीप् एवञ्च सकलेष्टसिद्धिः। अत्र समाधानं विभावयन्तु सुधियः । घेर्ङितीति अत्र घेर्ङि इत्येव सूत्रमस्तु सुपि चेत्यतः सुपीत्यनुवर्तते तच्च विशेष्यं ङीति विशेषणम् एवञ्च यस्मिन् विधिस्तदादावल्ग्रहणपरिभाषोपतिष्ठते तथा च ङादौ सुपि गुणो भवतीत्यर्थः। न च प्रवाहवेत्यादौ प्रवाहुशब्दात् तृतीयैकवचनं तत्स्थाने आङ्याजयाराणामुपसंख्यानमिति वार्तिकेन आङादेशः चत्र ङादित्वाभावात् गुणो न स्यादिति वाच्यम् । ङादेशेनैव तत्सिद्धेः न च मत्यामित्यादौ ङेरामि कृते आण्नद्या इत्याट् न स्यात् अत्राटः प्रयोजनन्तु नुट्बाधनरूपं स्थानिवद्भावस्तु न विशेषणेनालाश्रयणे ऽनल्विधाविति निषेधादिति वाच्यम् । ङेरामित्यत्र ङेर्ङाम् नद्याम्नीभ्य इत्येव सूत्रमस्तु ङेर्ङामादेशेन सकलेष्टसिद्धिः अत्र समाधानं मृग्यमिति तन्न । ह्रस्वात्तादौ तद्धितइत्यत्र ह्रस्वात्ति इति वक्तव्ये आदिग्रहणं व्यर्थीभूय ज्ञापयति यस्मिन् विधिरित्यस्या अनित्यत्वं तथा च ङान्ते सुपीत्यर्थापत्तौ उदाहरणस्यैवोच्छेदापत्तिरिति समाधानसत्वात् । ननु ङेर्ङामि कृते इत्संज्ञापि प्राप्ता आडागमो ऽपि प्राप्तः तत्र वार्णादाङ्गं बलीय इति इत्संज्ञां बाधित्वाट् स्यात् ततश्च प्रत्ययादित्वाभावात् ङकारलोपो न स्यात् अत एवान्तरङ्गत्वेनापि पूर्वं ङलोपो न वार्णपरिभाषा असिद्धपरिभाषाबाधिकेति सिद्धान्तात् नित्यत्वाच्च पूर्वमाडागम इति केचित्समाधानं कुर्वन्ति १७ अनेकाल् शित्सर्वस्यः अत्र सूत्रे शेखरकृतोक्तम् नानेकाल् इति न

सूत्रितम् । तथा सति अनन्तरस्येतिन्यायेनेदमादेः परस्यैव बाधकं स्यान्न तु ङिच्चेत्यस्येति इदं विरुद्धं तथा सति ङिच्चेति व्यर्थं ङिद्यो ऽनेकाल्स अलो ऽन्त्यस्य भविष्यत्येवेति तदर्थं सदनन्तरस्येति न्यायो ऽत्र न प्रवर्त्ततइति ज्ञापयिष्यति । अत्र समाधान विभावयन्तु सुधियः १८ ॥ अदर्शनं लोपः अत्र सूत्रे शेखरे उक्तम् प्रसक्तपदाभावे ग्रामे तिष्ठतीत्यत्र ल्यब्लोपे पञ्चमी तु न भवति ल्यबन्तार्थनिरूपिताधिकरणत्वं ग्रामस्य नास्तीति न दोषः पश्चादुक्तं त्रपु इत्यत्र तुगापत्तिरस्ति चात्र क्विपो ऽदर्शनम् । एवं च प्रत्ययलोपे प्रत्ययलक्षणं भवतीति तुक्प्राप्नोति अयं ग्रन्थः स्थानिवदादेशो ऽनल्विधाविति सूत्रस्थभाष्यविरुद्धः तत्र भाष्ये उक्तं बुद्धेरेव स्थान्यादेशभाव इति । अन्यथा शब्दानित्यत्वप्रसङ्गात् । पुनश्च शङ्कितम् । सति कर्मणि इत्यणः वृद्धिप्रसक्तौ कवृद्धिः क्रियेत केन चित्कार्यं प्राप्नोति किं कारणम् स्थानिवत्त्वात् समाहितं च षष्ठीनिर्दिष्टस्यादेशः स्थानिवद्भवतीति न स्थानिवद्भावः एवं प्रकृते षष्ठीनिर्दिष्टत्वाभावात्स्थानिवत्त्वाप्राप्तिः प्रत्ययलोपे प्रत्ययलक्षणमिति तु नियमार्थम् । तेन तद्विषये सर्वत्र स्थानिवत्त्वेन निर्वाहः एवं च त्रपु इत्यत्र तुकः प्राप्तिरेव नेति तद्विरोधः समाधानं तु षष्ठीनिर्दिष्टस्येति नानुवर्त्तते । अपवादे उत्सर्गकृतं तु न भवति यदयं शबपवादभूतान् कांश्चिच्छ्यन्नादीन् शितः करोति । अन्यथा स्थानिवत्त्वेन निर्वाहात् १९ द्विस्त्रिश्चतुरितिकृत्वो ऽर्थे यो विसर्ग इति नार्थः चतुःशब्दे ऽसम्भवात् किन्तु द्विरादीनामित्यत आह वर्त्तमानामेषामिति । इसुसोरितिसूत्ररीत्या सुच इति सूत्रयितुमुचितं सुजन्तस्य पदस्येत्यर्थादिति शेखरे उक्तम् । इदं चासङ्गतमिव भाति सुच इतिन्यासे चतुःकरोतीत्यत्र इदुदुपधस्येत्येतद् दृष्ट्या सुच

इत्यस्यासिद्धत्त्वात् । नित्यं षत्वापत्तेः सिद्धान्ते तु चतुर्ग्रहणसामर्थ्यान्न नित्यं षः समाधानं तु सुच इति न्यास इदुदुपधस्येत्यतः प्राक् पाठ्य इति न कश्चिद्दोषः २० इकोगुणवृद्धी । इग्ग्रहणमात्सन्ध्यक्षरव्यञ्जननिवृत्त्यर्थमिति । अत्र च कैयटग्रन्थः अकारस्य सत्यसति च गुणे कृते रूपे विशेषो नास्तीत्यकारग्रहणं वार्तिके न कृतमिति । अत्र केचिद्विशेषं दर्शयन्ति । अकारस्याकारे गुणे कृते पेचिथेत्यत्र न शसददवादिगुणानामिति निषेधादेत्वाभ्यासलोपौ न स्त इति विशेषो ऽस्त्येव । थलि च सेटीति सूत्रारम्भसामर्थ्यान्न निषेध इति चेन्न । एवं च पेचिथेत्यत्रेव ववरिथससरिथेत्यादावपि निषेधानापत्तिः न शसददेति सूत्रे गुणग्रहणस्य न वैयर्थ्यम् । पपरतुः पपरुरित्यादौ ऋच्छत्यृतामिति गुणे एत्वाभ्यासलोपनिवृत्त्या चारितार्थ्यात् अत्र केचिदित्थं समाधानं कुर्वन्ति । केवलं दीर्घस्थानेगुणग्रहणस्य लब्धावकाशत्वे गुणग्रहणमपहाय तत्स्थाने ऋग्रहणमेव कुर्यात् । सामान्यग्रहणं विजातीयस्थानिको विजातीयो गुणो गृह्यतइति गुणग्रहणसामामर्थ्यात्ससरिथ ववरिथेत्यादावपि निषेधः पेचिथेति तु नाभ्य विपयः विजातीयस्थानिकगुणाभावादिति कैयटग्रन्थे न काप्यनुपपत्तिः । अथ वा थलि च सेटीति सूत्रोक्तभाष्यरीत्या न शसददेति सूत्रे गुणग्रहणं गुणावयवपरं गुणावयवो यो ऽकारस्तस्य निषेधः तच्च नुनविथेत्यत्रैव सम्भवतीत्यदोषः २१ क्ङिति चेति सूत्रे क्ङितिप्रतिषेधे तन्निमित्तग्रहणं कर्तव्यम्। किं प्रयोजनम् उपधारारवीत्यर्थं न कर्तव्यम् ज्ञापकात्प्रतिषेधो भविष्यति यदयमिकोझल् हलन्ताच्चेति सनि कित्त्वं शास्ति तज्ज्ञापयत्याचार्यो भवत्युपधाभूतस्यापि निषेध इति भाष्यग्रन्थः। अत्र केचित् । हलन्ताच्चेति सूत्रस्य न वैयर्थ्यं दित्सतीत्यत्र

ददः दधः पक्षे आदन्तलक्षणे युकि दायः धाय इति अत्रेयमाशङ्का मास्त्विदं सूत्रं दददाने दधधारणे इमौ धातू आभ्यां पचादित्वादचि ददः दधः आदन्ताभ्यां दाधाभ्यां णे युकि दायः धाय इति अत्रोच्यते अचिकृतेन दद इति अददः अत्र नञ्तत्पुरुषे तुल्यार्थे तृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्त्या इत्यनेनाव्ययपूर्वं पदमकृतिस्वर इष्यते तं बाधित्वा अच्कावशक्तौ अजन्तं कान्तम् अन्तोदात्तं स्यात् अशक्तौ इति अन्तोदात्तत्वं स्यादिति सूत्रतत्त्वम् । चितःसप्रकृतेर्बह्वकच्कार्यार्थं चितः स्थाने चित्प्रकृतेरन्त उदात्तो भवतीति तदर्थः न तु प्रत्ययमात्रस्यान्तः उदात्त इति अत्र अकचश्चित्वं ज्ञापकम् अन्यथा अकच एवान्तोदात्त्वे प्रत्ययस्वरेणैवोदात्तत्वे सिद्धे तद्व्यर्थं सदत्र ज्ञापकमित्यत्र शेखरग्रन्थः तास्यानुदात्तेङ्दुपदेशाल्लसार्व्वधातुकमनुदात्तमह्निङोः अस्मात्परं लसार्वधातुकमनुदात्तं स्यादिति तदर्थः न्हुङ् अधीङ्वर्ज्जयित्वा अत्र च शेखरग्रन्थ रुणद्धीत्यत्र ष्णमो मित्वेन परश्चेत्यस्य बाधे तत्सन्नियोगशिष्टप्रत्ययाद्युदात्तस्याप्राप्तौ तन्मध्यपतितन्यायेन विशिष्टस्य धातुत्वात् धातुस्वरेणान्तोदात्तत्वमित्युक्तम् । अयं ग्रन्थः परस्परविरुद्धः यथाऽत्र मित्वेन परश्चेत्यस्य बाधे तत्सन्नियोगशिष्टप्रत्ययाद्युदात्तस्यापि बाधः एवमकजपि प्राक् टेर्ग्रहणेन परश्चेत्यस्य बाधकः तत्सन्नियोगशिष्टप्रत्ययाद्युदात्तस्याप्राप्तावित्यस्य ज्ञापकतावर्णनयुक्तमिति विरोधः । अत्र नवीनैरित्थं परिह्रियते उभशब्दस्य सर्वादौ पाठो व्यर्थ इति प्रघट्टके भाष्यग्रन्थेऽथेदानीं काकचोः स्वरे विशेषो नास्तीति अस्मादेव भाष्यादकचि सन्नियोगशिष्टन्यायस्यानाश्रयणम् ष्णस्याप्यनाश्रयणे प्रमाणाभावः अन्यदपि विभावयन्तु सुधियः ॥

आर्द्धधातुकस्येड्वलादेः अत्रार्द्धधातुग्रहणं किम् जुगुप्सते अत्रा-

पि इट् स्यादिति शेखरग्रन्थः अत्र सूत्रे भाष्ये कृत इद्धातोरित्य-तो धातोरित्यनुवर्त्त्य धातोर्विहितस्य धातुपदमुच्चार्य विहितस्य वलादेरित्यर्थः तेन जुगुप्सते इत्यत्र नेडित्यार्द्ध धातुकग्रहणं प्रत्याख्यातं । सार्व्वधातुकस्यचनेट् रुदादिभ्यःसार्व्वधातुके इति नियमात् तस्य सिद्धः स्यसिच्सीयुट्तासिष्विति सूत्रे च प्रकृतेऽपीडागमः प्राप्नोतीत्याशङ्क्य आर्द्धधातुकस्येडित्यतो आर्द्धधातुकग्रहणमनुवर्त्त्य योगविभागमाश्रित्य यावानिट् स सर्वो ऽपि आर्द्धधातुकस्यैवेति नियमात् प्रकृतेरनिडित्युक्तम् अ-यं भाष्यग्रन्थः पूर्वापरविरुद्धः शेखरग्रन्थो ऽपि भाष्यविरुद्धः । अत्रेत्थं विरोधोद्धारं केचित् कुर्व्वन्ति विधिसूत्रे प्रयोजनं ना-स्तीति प्रत्याख्यानार्थः योगविभागाय एतत्प्रयोजनमित्यर्थः । जुगुप्सते इतिशेखरग्रन्थस्तु धातुग्रहणमननुवृत्त्योक्तम् ॥ व्यपदे-शिवद्भावो ऽप्रातिपदिकेन अत्र च ज्ञापकम् पूर्वादिनिः सपूर्वा-च्चेति सूत्रद्वयकरणम् अन्यथा पूर्वादिनिसपूर्वादित्येकयोगेन नि-र्वाहात् न च इष्टादिभ्यश्चे त्यनुवृत्त्यर्थं सपूर्वादिनिरितिपृथग्योग-स्तत्रावश्यकस्तेननिष्टीति सिद्धमिति वाच्यम् । अनिष्टीत्यस्यानि-ष्टत्वात् इष्टत्वे एकयोगकरणे ऽप्येकदेशानुवृत्तौ बाधकाभावात् एवञ्च परिभाषाज्ञापकम् । इयं च धर्म्मिग्राहकमानात् प्रत्ययवि-धिविषयैव अत एव नान्तादसंख्यादेर्मडिति चरितार्थम् अत ए-वेत्यस्य प्रत्ययविधिरेवेत्यर्थः अतएवेत्यस्य परिभाषास्वीकारात् एवेत्यर्थः अत्र नान्तादसंख्यादेरित्यचारितार्थ्यमित्यस्याप्रत्यय-विधित्वेन तत्र संख्यादित्वाविरोधात् । (एवं त्रिपादीस्थाशास्त्र-सिद्धये अत्रापि त्रिपादीकर्तृकसत्ताभावज्ञानं प्रतिबन्धकम् एवञ्च पूर्वशास्त्रं प्रति त्रिपादीस्थमसिद्धमित्यनुपपन्नमेव स्यादत अनाहा-र्येत्युक्तम् १ "स्त्रीप्रत्यये चानुपसर्ज्जने न" अनुपसर्ज्जने स्त्रीप्रत्यये

तदादिनियमो न उपसर्ज्जने तु तदादिनियमो भवत्येव तदादिनियमो नेत्यस्य प्रत्ययग्रहणपरिभाषोपस्थितिर्नेत्यर्थः अस्या उदाहरणम् परमकारीषगन्धीपुत्र इति करीषस्येव गन्धो ऽस्य करीषगन्धिः उपमानाच्चेति गन्धस्य इकारादेशः करीषगन्धेरपत्यं स्त्री इत्यर्थे तस्यापत्यमित्यणि अणिञोरनार्षयोरिति अणः ष्यङादेशे वृद्धौ यङश्चाविति चापि कारीषगन्ध्या परमा चासौ कारीषगन्ध्या चेति परमकारीषगन्ध्या तस्याः पुत्रः इति षष्ठीतत्पुरुषः अत्र ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे इति संप्रसारणे पूर्वरूपे संप्रसारणस्येति दीर्घः अत्र ष्यङन्तं यत्पूर्वपदं तस्य संप्रसारणमित्यर्थः प्रत्ययग्रहणपरिभाषाऽनुपस्थित्या परमकारीषगन्ध्या इति विशिष्टस्य ष्यङन्तत्वेन संप्रसारणं सिध्यति अतिकारीषगन्ध्या पुत्र इत्युपसर्ज्जने प्रत्ययग्रहणपरिभाषोपस्थित्या कारीषगन्ध्येत्यस्यैव ष्यङन्तत्वेन तस्य पूर्व पदत्वाभावात् न संप्रसारणमित्यर्थः । अत्रोच्यते अतिकारीषगन्ध्यापुत्र इत्यत्र संप्रसारणाभावार्थं स्त्रीप्रत्यये इत्यादिपरिभाषास्वीकर्त्तव्या इतिस्थितं तदर्थं नारम्भणीया ष्यङःसंप्रसारणमितिसूत्रे अनुपसर्ज्जनस्येत्येव वक्तव्यम् अनुपसर्ज्जनस्य ष्यङन्तस्य संप्रसारणं भवतीत्यर्थेन अतिकारीषगन्ध्यापुत्र इत्युपसर्जने संप्रसारणाभावः सिद्ध एवेति परिभाषा न कर्त्तव्या अत्रेत्थं नवीनः समादधति परिभाषाया असत्त्वे परमा कारीषगन्ध्या यस्य स परमकारीषगन्ध्यः विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो द्रष्टव्य इत्यनेन परमशब्दस्य लोपे पुनः कारीषगन्ध्यस्य पुत्रः इति विग्रहे तत्पुरुषसमासे कारीषगन्धीपुत्र इति सम्प्रसारणमिष्यते सूत्रे अनुपसर्जनस्येति प्रतिषेधेन ष्यङन्तस्य इहोपसर्ज्जनत्वेन न स्यादितिवाच्यम् ॥ स्तोऽच्छुनेति सूत्रे योगः संयोगपरः स्यात् समारे

उदाहरणम् ज्योतिष्टोमः आयुष्टोमः अत्र मूलग्रन्थे समासे इत्यस्य प्रत्युदाहरणम् । ज्योतिषो नाम ज्योतिःशब्दात्परो यत्र स्तोमशब्दो व्यपेक्षायां यत्र षत्वं स्यादित्यर्थः तिष्ठतु ज्योतिः स्तोमो ऽस्ति ब्राह्मणानां इत्यादाविति मूलाशयः ॥ रामादिति अत्र जत्वं वावसाने इति मूलग्रन्थः । तस्य मनोरमादि ग्रन्थे इत्थं व्याख्यानं पूर्वं जश्त्वं पश्चाद्वावसाने इति शब्देन्दुशेखरग्रन्थे तु जश्त्वं बाधित्वा वावसाने इत्युक्तम् बाधकत्वं त्वपवादकत्वेन तच्च जश्त्वाप्राप्तियोगे चर्त्वस्याचरितार्थत्वरूपम् इदं चासङ्गतम्। रत्नमुट्रत्नमुडिदिरूपद्वयस्यासिद्धिप्रसङ्गात् रत्नमुडित्यत्र जश्त्वं बाधित्वा षस्य एव चर्त्वं तदभावे जश्त्वं तथाच रत्नमुष् रत्नमुट् इति स्यात् । अत्र केचित्समाधानं वदन्ति जक्षित्यादयः षट् इति निर्देशेन षस्य चर्त्वेन टकार एव न षकारः जश्त्वबाधकत्त्वं चर्त्वस्येति ग्रन्थस्य पूर्वापरविरोधः । उपानदित्यत्र शेखरे उक्तं धत्त्वदत्त्वचर्त्वानीति तदसङ्गतं स्यात्, किञ्च चतुर्णामित्यत्र णत्वं द्वित्वमिति प्रतीकमुपादाय ननु द्वित्त्वं णत्वमित्येव युक्तं तत्र पूर्वत्रासिद्धीयमद्वित्वे इति वचनात् इदञ्च वर्णद्वित्वे ऽपि प्रवर्तते वाक्वाग् इति भाष्योदाहरणात् द्वित्वदृष्ट्या चर्त्वस्यासिद्धत्वात् प्राक् एकस्यैव द्वित्वे अन्यस्य चर्त्वे पूर्वगश्रवणापत्तिरित्युक्तम् । अस्मादप्यायाति पूर्वं जश्त्वं पश्चाच्चर्त्वमिति विभावयन्तु सुधियः ॥ प्राचां ष्फ तद्धितः यञन्तात् ष्फः स्यात्स च तद्धितः अत्र सूत्रे तद्धितग्रहणं प्रातिपदिकार्थं तत्फलन्तु ङीप्सिद्धिः तत्रापि प्रातिपदिकाधिकारात् तत्तु षित्त्वसामर्थ्येन साधितं यस्येति लोपार्थमपि तद्धितसंज्ञानापेक्षिता गार्ग्यायणीत्यत्र सवर्णदीर्घेणापि रूपासिद्धेः पुनस्तद्धितग्रहणं ज्ञापयति । क्व चिदन्यतो ऽपि ष्फो भवति । तेन आसुरेरुपसंख्या-

नलोपसम्पादनेन कित्त्वस्य चारितार्थ्यात् । तत्र हि दम्भधातुस्ततः सन् हलन्ताच्चेति कित्त्वं तेन नलोपः दित्सतीति । न च दम्भेः परस्यैव सनः कित्त्वविधानेन सिद्धौ सामान्यतो हलन्ताच्चेति कित्त्वविधानमनर्थकमिति वाच्यम् । सिसृक्षति दिदृक्षतीत्यत्र सृजिदृशोर्झल्यमकितीत्यमागमनिवृत्तये कित्वस्य कर्तव्यतया सामान्ययोगारम्भात् । समाधानं तु एवं सनि सृजिदृशोर्झल्यमकित् सनि इको झल् दम्भेरिति लघुनोपायेन सिद्धे हलन्ताच्चेति ज्ञापकं युक्तमेव २२ नलोपः प्रातिपदिकान्तस्य । अत्र पदस्येत्यधिकारस्तस्य प्रातिपदिकेति लुप्तषष्ठ्यन्तमभेद सम्बन्धेन विशेषणम् । न च येन विधिरित्त्यनेनैवान्तग्रहणे लब्धे पुनरन्तग्रहणं व्यर्थमिति वाच्यम् । अन्तग्रहणेन क्व चित्पदस्येत्यस्यावयवषष्ठीत्वं बोध्यम् । तेन मादुपधायाश्चेत्यत्र पदस्येत्यधिकारे मत्वन्तपदस्य मस्य व इति नार्थः किन्तु पदावयवस्य मतुपो मस्येत्यर्थः अत एव वृक्षवन्त इत्यादौ वत्वासिद्धिः अन्यथा वृक्षवानित्यादावेव स्यादिति भावः २३ । तस्माच्छसो नः पुंसि । ननु शसोनुम् पुंसीत्येव सूत्रमस्तु । अक इत्यनुवृत्त्याकः परस्य शसां नुमित्यर्थः । एवं च शसः शकारस्यान्तावयवो नुमागमः पश्चात्पूर्वसवर्णदीर्घे संयोगान्तस्येति सलोपे सिद्धम् । रामानित्यादौ लिह इत्यादौ च न दोषः शसोऽकः परत्वाभावात् । एतान् चतुरो गाः पश्यसीत्यादावप्योकारसत्वे ऽकः परत्वाभावः औतोम्शसोरित्याकारे ऽकः परस्य शसोऽ भावादिति चेन्न । विश्वप इत्त्यादावातोधातोरित्यालोपेऽपि तस्याचः परस्मिन्नित्यत्र पञ्चमीसमासपक्षे स्थानिवद्भावेनाकः परत्वान्नुमापत्तेः । पञ्चमीसमासप्रत्याख्याने तु प्रकृत्तेः स्थानिवद्भावाभावेन दोषाभावः । न चाष्टावित्यत्रात्वे कृते जश्शसो-

रौशादेशे कृते अत्र नुम्स्यादिति वाच्यम् । अकारस्य परनिमित्तस्य बहिरङ्गतया ऽकः परत्वाभावः अथ वा औशादेशः प्रियतिस्र इत्यादौ रणे बाधेः अत्र समाधानं विभावनीयम् २४ हल्ङ्याभ्यो दीर्घात्सुतिस्यपृक्तं हल् । अत्र सूत्रे मनोरमायां हल्ङ्यापः सोरित्येव सूत्रयितुमुचितामित्युक्तं शब्दरत्नग्रन्थे तु सुपदान्तिस्योरप्युपलक्षणम् । तेनाविभाराज्यमिति सिद्धम् । तत्र हि अविभरम् इति स्थिते सकारस्य संयोगान्तलोपः रोरीति रेफलोपः पश्चाद्राज्यशब्दसमभिव्याहारे ढ्रलोप इति दीर्घः स न स्यात् । संयोगान्तलोपस्यासिद्धत्वाद्रेफपरत्वाभावादित्युक्तम् । अयं शब्दरत्नग्रन्थः शेखरग्रन्थेन सह विरुद्धः शेखरे तु अजर्घा इत्यादौ ढ्रलोपसूत्रस्थभाष्यप्रामाण्येनपूर्वत्रासिद्धमित्यत्र पूर्वशब्देन ढ्रलोपसूत्राग्रहणबोधनादित्युक्तम् । अत्रेत्थं विरोधपरिहारः भाष्यप्रामाण्येन प्रयोगसाधुत्वम् मतमिति प्रयत्ने प्रकृते तु तिसिग्रहणरूपो यत्न एवास्ति । नासूया कर्तव्या यत्रानुगमः क्रियते इति पङ्क्तिविंशतीतिसूत्रभाष्यात् २५ वदव्रजहलन्तस्याचः अतोहलादेरित्यस्य बाधनार्थं वदव्रज्योरुपादानम् । अन्यथा हलन्तत्वादेव सिद्धेः । नन्वत्रसूत्रे हल्ग्रहणं किमर्थम् । वदव्रज्योश्च इत्येव सूत्रमस्तु वजत्रज्योर्यस्य कस्यचिदङ्गस्याचो वृद्धिः परस्मैपदे सिचीति सूत्रार्थः । अजन्तस्याङ्गस्य वृद्धिरिति तु नार्थः । इकारान्तादौ सिचि वृद्धिरिति वृद्धिविधानस्य वैयर्थ्यात् । अकारान्ते ऽचिकीर्षीदजिहीर्षीदित्यत्र तु परत्वादतो लोपेन बाधात् । आकारान्ते ऽपासीदयासीदित्यादौ फलाभावान्न वृद्धिरिति भावः । अनन्त्ये अपीपटदित्यत्रानन्त्यविकारे ऽन्त्यसदेशस्येति परिभाषया न दोष इति चेन्न । रञ्जधातौ अराङ्क्षीदित्यादावनेकव्यवधाने वृद्धिर्न

स्याद्धल्ग्रहणे तु वर्णग्रहणे जातिग्रहणमिति परिभाषयाऽनेकव्य वहिते ऽपि वृद्धिरित्यर्थः २६ न पदान्ताट्टोरनाम् । अत्र सूत्रे शेखरे विशेषणेन तदन्तविधौ सिद्धे ऽन्तग्रहणं स्पष्टार्थमित्युक्तम् । पदान्ताद्वेति सूत्रे च विशेषणेन तदन्तविधौ सिद्धे ऽन्तग्रहणं पदविधित्ववारणाय । अन्यथा समर्थः पदविधिरिति परिभाषया सामर्थ्ये एव स्यात् । तिष्ठति कुमारी च्छत्रं देवदत्तेत्यादौ न स्यात् इत्यन्तग्रहणस्य प्रयोजनमुक्तम् । इदं च प्रयोजनं न पदान्तादित्यत्रापि सम्भवति । तिष्ठन्तु षट् सन्तो गच्छान्त्वित्यादौ निषेधो न स्यादिति पूर्वापरविरोधः । अत्रेत्थं परिहारः न पदान्तादिति सूत्रे ऽन्तग्रहणाभावे ऽपि न समर्थपरिभाषोपस्थितिः अनामिति निषेधाल्लिङ्गात् । अन्यथा एकपदे षण्णामित्यत्र सामर्थ्याभावेन न पदान्तादिति निषेधाप्राप्तौ अनामित्यस्य वैयर्थ्यं स्यात् । समर्थपरिभाषादृष्ट्या त्रिपादीस्थस्य न प पदान्तादित्यस्यासिद्धत्वान्न तत्रोपस्थितिरिति न पूर्वापरविरोधः । २७ ङसिङसोश्च अत्र ङितो ऽसीत्येव सिद्धे ङसिङस्ग्रहणं स्पष्टार्थम् । अत्र ङित्यसीति वक्तव्ये ङितो ऽसीति षष्ठ्यन्तपञ्चम्यन्तयोर्वासीति सप्तम्यन्तान्वये बीजाभावात् । किञ्च गामतिक्रान्त इत्यर्थे ऽतिगोशब्दाद्गोन्तात्तपुरुषाट्टचि कृते तस्मान्ङसि विभक्तौ पूर्वं ङसकारयोः पररूपे पश्चादनेन पूर्वरूपाप्तौ चातिगोरिति रूपापत्तेः सिद्धान्ते तु समस्तान्ङसि विधाने टचि अवादेशे एङो ऽभावे पूर्वरूपशङ्का नेति बोध्यम् । तस्मात् ङ्यसि इत्यन्तलाघवान्ङादावसि पूर्वरूपमित्यर्थे कृते ऽपि न दोष इति विभाव्यं नव्यैः २८ समःसुटि । अत्र मः सुटीति न्यासो ऽस्तु लाघवात् । अत्र सुटि परे समो मकार एव सम्भवति नान्यमकारस्ततश्च नान्यत्र दोषः संस्कर्तारौ सर्वत्रा-

न्वाख्यानं सिद्धमिति कश्चित् । वस्तुतः सम् सुट्संस्कार इति वाक्ये रुत्वापत्तेः । किञ्च सुडित्यागमग्रहणमाहोस्वित्प्रत्याहारग्रहणं सम्परिभ्यां करोतौ भूषणे इति सूत्रप्रामाण्यादागमग्रहणमिति चेदस्तु । संस्कारशब्दे दोषस्तस्मात्समः सुटीत्येव न्यासः २९ समः समिः अत्र सूत्रे शेखरे समोमिङिति न सूत्रितम् । ङिच्चेति परिभाषाज्ञानकृतगौरवापत्तेः । अत्र रूपासिद्धिरप्यायाति । समो ऽकच्यनेकाल्परिभाषया विशिष्टस्य सम्यादेशे सम्यङ् इति रूपम् । समो मिङि तु ङिच्चेति परिभाषया ऽन्त्यादेशे सकम्यङिति स्यात् । अत्रोच्यते । बहिर्भूतकुत्सादिनिमित्तकत्वेनाकचो बहिरङ्गत्वादादेशोत्तरमेवाकजिति । अथ वा एतत्सूत्रभाष्यप्रामाण्येनात्राकचो ऽनभिधानमेव । ३० । सार्वधातुकार्द्धधातुकयोः । नन्वत्र पिदार्द्धधातुकयोरित्येव सूत्रमस्तु । पिति आर्द्धधातुके परे इगन्तस्य गुणः स्यादिति सूत्रार्थः । न च हरिष्वित्यादावतिप्रसङ्ग इति वाच्यम् । आर्द्धधातुकसाहचर्याद्धातोर्विहिते पिति परे इत्यर्थो व्याख्यानात् । अत एव ल्पु धृपु । इत्यादावपि न धातोः पितः परत्वेऽपि धातुपदमुच्चार्य विहितत्वाभावात् । सार्वधातुकमपित् । इति तु कर्तव्यमेव । उष्ट इत्यादौ ग्रहिज्येति सम्प्रसारणार्थम् । वस्तुतस्तु साहचर्यमनित्यमिति ज्ञापनार्थंसार्वधातुकग्रहणम् । क्त्वोऽर्थग्रहणं तु शेखरे खण्डितम् । मृच इत्येव सिद्धान्तितम् । तेन सिजभ्यस्तेत्यादौ पूर्वपरसाहचर्यमनादृत्य अभ्यस्तात्परस्य ङित्संबन्धिनो झेर्जुस् । तेन भवतेर्यङ्लुगन्ताल्लङि अबीभवुरिति । ददातेर्जोहोत्यादिकाल्लङि अददुरिति सिद्धम् । अत्रोच्यते । तिङ्शिदार्द्धधातुकेषु लाघवादित्येवास्तु । न तत्र दोषलेशः तिङि शिति आर्द्धे धातुके च परे इगन्ताङ्गस्य गुणः स्यादिति सूत्रार्थे सक-

लेष्टसिद्धिः अत्र समाधानं कुर्वन्तु नव्याः इदुदुपधस्य चाप्रत्य यस्य । अत्र इदुद्भ्यां प्रकृतेरिति मुनेरभिप्रायः इदुद्भ्यां परस्य प्रकृत्यवयवस्य विसर्गस्य षत्वं विधीयते इति सूत्रार्थः इदुतोऽपि प्रकृतिसमवेतत्वेन प्रकृतिसमवेताभ्यां परस्य प्रकृत्यवयस्य विसर्गस्यषत्वविधानेनैकप्रकृतिप्रत्ययत्वसम्बन्धः तेनाविष्कृतं निष्प्रत्यूहाद्युदाहरणं बोध्यम् । तदन्यत्प्रकृत्यविहितप्रत्ययस्थानिकविसर्गस्य व्युदासः तेन कविभिः कृतमित्यादौ नास्य प्रवृत्तिः इदं सिद्धान्तमज्ञात्वा मूढो जल्पति । न न्वनेन सूत्रेण मातुः कृपेत्यादौ षत्वं स्यादित्यत आहैकादेशशास्त्रनिमित्तकस्य न षत्वम् । एकादेशशास्त्रनिमित्तकस्येति । तदर्थः अत्र ज्ञापकं कस्कादिगणे भ्रातुः पुत्रशब्दस्य पाठः अन्यथा इदुदुपधत्वादेव तत्र षत्वस्य सिद्धत्वे किं तत्र पाठेन तत्रायं पूर्वपक्षः । भ्रातुः पुत्रशब्दस्य पाठो न ज्ञापकः तत्र हि इदुदुपधस्य षत्वे कर्तव्येषत्वतुकोरसिद्ध इति एकादेशस्यासिद्धत्वादिदुपधत्वाभावादप्राप्तं षत्वमिति विध्यर्थो भ्रातुः पुत्रशब्दस्य कस्कादिषु पाठः । मातुः कृपेत्यादौ एकादेशस्यासिद्धत्वान्न षत्वम् इति मूले उक्तम् । ज्ञापकं कथमिति अत्रोच्यते षत्वतुकोरसिद्ध इति सूत्रे पदान्तपदाद्योरेकादेशोऽसिद्ध इति वार्त्तिकेन प्रकृते सिद्धत्वाभावः तेन परिजीषु इत्यत्र षत्वासिद्धिः ज्याधातोर्ण्येन्तधातोश्च क्विपि ग्रहिज्येति संप्रसारणे पूर्वरूपे हल इति दीर्घः ततः सप्तमी बहुवचने सुपि इणः परत्वात्षत्वम् अन्यथा पूर्वरूपस्यासिद्धत्वादाकारेण व्यवधानान्न स्यात् वृद्धेछत्रमित्यत्र तुक् न अन्यथा सप्तम्येकवचनेन सह एकादेशस्यासिद्धत्वात्तुक् स्यादेव । वस्तुतस्तु इग्यणः सम्प्रसारणमित्येवास्तु सम्प्रसारणाच्चेति न कार्यं प्रकृत्यैकाजिति प्रकृतिभावात् शावयतीत्यस्यासाधुत्वेन शुनय-

तीत्यस्यैव प्रामाणिकत्वेन डापूसूत्रस्थबहुभ्वा इत्युदाहरणे संप्र-सारणाकरणेन न कापि दोषः तदा षत्वे कर्त्तव्ये पदान्तपदा-द्योरेकादेशो ऽसिद्ध इति नियमः स्वीकार्य्यः एवञ्च भ्रातुः पुत्र शब्दस्य पाठो विध्यर्थ एव कथं ज्ञापकेति विभावनीयं सुधाभिः आडजादीनाम् ननु अजादीनामपि लुङ्लङिति सूत्रेण अडेवास्तु एवञ्च प्रकृतसूत्रं नारम्भणीयम् । आटश्चेत्यत्र अटश्चेत्येवमस्तु अस्वपो हसनित्यत्र तु अड्गार्ग्यगालवयोरिति सिप्यडागमे ऽपि न दोषः अटश्चेत्यत्र धातोरित्यपकर्षात् धात्ववयवस्याटो ऽचि वृद्धिरित्यर्थः । आणूनद्या इत्यत्र अड्वक्तुमशक्यं बहुश्रेयस्यै इत्यत्र वृद्धिरेचीति वृद्धिं बाधित्वा अतो गुण इति पररूपापत्तेः अटो विधानसामर्थ्यं तु न वहुश्रेयस्यामित्यादौ नुड्बाधनेन चारितार्थ्यात् अटश्चेत्यस्य तु न प्रवृत्तिस्तत्र सूत्रे धातोरित्य-पकर्षात् इति शेखरग्रन्थः । इण धातौ शेखरे तु आटश्चेत्यस्य प्रत्याख्याने अजादीनामप्यडागमे अतोगुणेति पररूपमाशङ्क्य अतो गुणेत्यस्यानन्तरम् अटो न न्यासः कार्य्यः अटः पररूपं नेत्यर्थः । तेनाटीत्यादौ पररूपं नेत्युक्तम् । एवञ्चाटो न इति न्यासेनैव बहुश्रेयस्यै इत्यादावपि पररूपस्य निषेधे सिद्धे अ-त्राट् वक्तुमशक्य इति ग्रन्थो विरुद्धः । अत्रेत्थं विरोधपरिहारः अटश्चेति वृद्धिबाधकपररूपस्यैव बाधकम् अटो नेति सूत्रं न तु वृद्धिरेचीति वृद्धिबाधकम् एवं च वहुश्रेयस्यै इत्यादौ पररूपं स्यादेव तदर्थं चाट्करणम् अत्र प्रमाणम् अटश्चेति चकारेण पुनर्वृद्धिविधानं बाधकबाधनार्थं तेन अटो न उस्योमाङ्ङ इत्या दि नारम्भणीयमिति भाष्यम् भूवादयोधातवः अत्र सूत्रे क्रि-यावाचिनः किम् याः पश्यसीत्यादौ धातुत्वं माभूत् । न च लक्षणप्रतिपदोक्तपरिभाषया न धातुत्वमितिवाच्यम् । भ्वादि-

षु लाक्षाणकानामपि अञ्चत्यादीनां दर्शनेन तद्विषये तत्परिभाषाया अप्रवृत्तेः ।

नकारजावनुस्वारपञ्चमौ झलि धातुषु ।
सकारजः शकारश्चेत्षाट्टवर्गस्तवर्गजः ॥

इत्यभियुक्तोक्तेरिति मनोरमाशब्दरत्नग्रन्थः । अत्रायं पूर्वपक्षः अञ्चत्यादीनां लाक्षणिकत्वे ऽपि न तत्र परिभाषाप्रवृत्तिर्लाक्षणिकप्रतिपदोक्तउभयरूपसत्त्वे हि तत्परिभाषाप्रवृत्तिः अञ्चेत्यादौ न तथा किं च धातुसंज्ञादृष्ट्या त्रिपादीस्थत्वेनानुस्वारादीनाम् । असिद्धत्वात्वात्प्रातिपदोक्तरूपमेव पश्यति धातुसंज्ञासूत्रमिति शब्दरत्नग्रन्थो ऽनुपपन्नः अत्रैवं पूर्वपक्षः क्रियावाचिग्रहणाभावे वा करोति वा भवति इत्यादौ वेत्यस्य धातुत्वे ऽधातुरितिपर्य्युदासेनाप्रातिपदिकत्वे सुबनुत्पत्त्या पदत्वाभावात् तिङ्ङतिङः इति तिङन्तात्परस्य तिङन्तस्य निघातो भवतीत्यनेन निघातो न स्यादिति शेखरग्रन्थः । अत्रेदं बोध्यम् । वा करोतीत्यादौ । न दोषः अर्थवत्सूत्रे धातुग्रहणं न कार्य्यम् । एवं च वा इत्यस्य धातुत्वे ऽपि प्रातिपदिकसंज्ञा सिध्यत्येव । न च धातुग्रहणाभावे अहन्नित्यत्र प्रातिपदिकत्त्वे सति नलोपः स्यादिति वाच्यम् । न लोपः प्रातिपदिकेत्यत्र न लोपो ऽतिङिति न्यासेन तद्वारणम् रामानित्यादौ नलोपः नत्वविधानसामर्थ्यात् अन्यथा लोपमेव विदध्यात् राजीयतीत्यादौ तु न दोषः प्रत्यासत्या तिङ्निरूपितं यस्य पदत्वं तद्भिन्नस्य लोप इत्यर्थात् । अचः परस्मिन्पूर्वविधौ अत्र सूत्रे शेखरे अजादेशत्वेन वस्तुतो ऽजादेशः स्थानिवदित्यर्थः । न त्वादेशं विधाय किं चिदुद्देशत्वे एवार्थस्तेन णिलोपादेः स्थानिवत्वासिद्धिः अत एव ण्यन्ताणिचि अवीवदादित्यादौ सिद्ध्यर्थे चङ्परनिह्रास

इति निषेधः सार्थकः । जुहुतइत्यत्र तु श्लौ परनिमित्तत्वाभा-वेन शपः अपरनिमित्तत्वेन परस्य ण्या लुको ऽपि तत्त्वेन श-प्त्वेन स्थानि तया भावेन स्थानिवत्त्वाभावात् । शप्त्वमाश्रित्य न गुणइत्युक्तम् । अत्र पूर्वापरविरोधः स्पष्टमेव वस्तुतो ऽत्राका-रस्यैव लुग्विधिस्थानिवद्भावेन दुर्वारः न च लघुनि चङ्परे ऽनग्लोपे अत्र सूत्रे शेखरे चङ्परे इति बहुव्रीहिः परग्रहणसा-मर्थ्यात् तद्विशेष्यं च णिजेव न तु लब्धाङ्गस्येत्यावर्त्य अङ्गसं-ज्ञानिमित्तकमित्यर्थात् अत एव श्रिप्रभृतीनां न सन्वत्त्वम् इदं चिन्त्यम् । अशिश्रियत् अदुद्रुवादित्यत्र सन्वत्त्वे न दोषः लघु-त्वाभावेन दीर्घाभावः न चेत्वं स्रवतीत्यादिसूत्रेणाभ्यासस्योव-र्णस्य इत्वमपि न अवर्णपरधात्वक्षरपरत्वाभावात् निषेधस्तु न प्रयोजनं चङ्यन्यतरस्यामिति चङि उपोत्तमस्य विकल्पोदात्त-त्वविधानात् तदभावे नाचित्स्वर श्रिप्रभृतिपदम् अचकमतेत्य-स्योपलक्षणं रूपे विशेषाभावेन कमेर्णिङीत्यस्यानन्तरम् । अप-वादभूतनद्बाधनाय लुङि ङिति वदेत् लुङ्परे कमेश्चङिति तदर्थः । अत्र सुधियो विभावयन्तु ॥ वोतोगुणवचनात् अत्र । उतः किम् शुचिरिति मूले उक्तम् । अत्र हि कृदिकारादिति ङीपो विकल्पस्य इष्टत्वेन शुक्लेति प्रत्युदाहरणं बोध्यमिति शेखरे उक्तम् इदमशुद्धं खरुसंयोगोपधान्नेति निषेधस्य जागरू-कत्वात् खरुसाहचर्य्येण संयोगोपधो ऽपि उकारान्त एव गृह्यते इति मते शुक्लेति प्रत्युदाहरणं सम्यगेव श्यामेत्यत्र तु न कश्चि-द्विवादः ॥ हलिसर्वेषाम् अत्र सूत्रे हलिकिम् । देवायिह इति प्रत्युदाहरणं मूले उक्तम् तदसङ्गतामिव भाति लोपःशाकल्य-स्येति एतद्विषये ऽपि देवायिहेत्यादौ च पदादिति व्योर्लोपः स्यात्तर्हि लोपः शाकल्यस्येति व्यर्थमेव स्यात् अत्रोच्यते लोपः

योर्लोपः हल्ग्रहणाभावे लघुप्रयत्नयकारे देवायिहेत्यत्र लोपः स्यादित्याशयः ॥ मोऽनुस्वारः अत्र सूत्रे पदस्येति किं गम्यते इति प्रत्युदाहरणमुक्तम् । असङ्गतम् नश्चापदान्तस्येत्यत्र मस्यानुवृत्तौ नस्य मस्य चापदान्तस्यानुस्वार इत्यर्थः । इदं च नियमार्थं करिष्यते अपदान्तस्य मस्य चेदनुस्वारस्स्यात्तर्हि झल्येव गम्यते इत्यादौ नानुस्वारप्राप्तिः न च विपरीतनियमस्स्यात् झल्यनुस्वारश्चेत्तर्हि अपदान्तस्यैव मस्येति हरिं सेवते इत्यत्र न स्यात् सूत्रं तु हरिं नमतीत्यादौ चरितार्थमिति वाच्यम् । हे मपरे वेति सूत्रेण मकारस्य मकारविधानानर्थक्यापत्तेः तद्धि मोऽनुस्वार इति प्रोक्तमनुस्वारबाधनार्थं विपरीतनियमे तु अनुस्वारप्राप्तिरेव नेति नेत्येवसिद्धे म इत्युक्तिर्मो न इति प्रशाम् झलयतीत्यादौ नत्वबाधनार्था निषेधस्त्वनन्तरत्वादनुस्वारस्यैव स्यात् । लोटो लङ्वत् । नन्विदं सूत्रं मास्तु लोटः स्थाने लोङ् प्रत्ययोऽस्तु तेन ङित्त्वात्तामादयः । टित्त्वाट्टित आत्मने एत्वसिद्धिरिति चेन्न । टोटकारेणैव सिद्धेः लोटो लङ्वदिति आतिदेशिकमनित्यमिति ज्ञापनार्थं तेन जुह्वतुरित्यत्र सिजभ्यस्तेति जुसविदोलटो वेत्यतो वेत्यनुवर्त्य व्यवस्थितपरिभाषया श्रये मजसवर्णन्तु न सम्भवति भाष्ये व्यवस्थितविभाषासु अपाठात्॥ स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् । अत्र सूत्रे उपसर्जनात् किम्। सुशिखेति मूले प्रत्युदाहृतम् । तदयुक्तम् । शोभना शिखा सुशिखेति समासे अन्तरङ्गत्वाट्टापि अदन्तत्वाभावान्ङीपो ऽप्राप्ते अत एव शेखरे सुशिखेति प्राक्षिप्तः पाठः । शिखेत्येवप्रत्युदाहरणं बोध्यमित्युक्तम् । तदपि न युक्तम् । अस्वाङ्गपूर्वपदाद्वेत्यतो अत्र अस्वाङ्गपूर्वपदादित्यनुवर्त्य तेन करमुखा कल्याणपाणिपादा इत्यत्र न ङीप् अत्र हि अस्वाङ्गपूर्वं यत्कल्याणेति ततः परं

पाणिपादिति तत्स्वाङ्गवाचकान्न स्वाङ्गसमुदायस्य स्वाङ्गवाचकत्वाभावात् पादशब्दस्य स्वाङ्गवाचकपरत्वाभावात् पाणिशब्दस्य अस्वाङ्गवाचकत्वादिति विभावनीयम् । नोपधायाः । अत्र पञ्चानामित्यत्र पकाराकारस्य दीर्घवारणयोपधाग्रहणमिति शेखरे उक्तम् उपधाग्रहणाभावे पञ्चानामित्यत्र उभयोर्दीर्घप्राप्तौ अनन्त्यविकारे अन्त्यसदेशस्य भवति अनन्त्योद्देश्यके कार्ये अन्त्यसदेशानन्त्यसदेशयोर्युगपत्प्राप्तौ अन्त्यसदेशस्यैवेति तदर्थः । अनयैव पञ्चानामित्यत्र पकाराकारस्य दीर्घाप्राप्तौ व्यर्थमेवोपधाग्रहणं क्रियमाणे ऽपि उपधाग्रहणे हंसशिरांसि इत्यत्र यस्याङ्गे उचिताकाङ्क्षाया सर्व्वनामस्थानग्रहणेनाङ्ग ऽस्यविशेषणम् । एवञ्चोभयोर्दीर्घप्राप्तौ परिभाषयैव वारणमुपधाग्रहणं चात्र पूर्वमात्रोपलक्षणार्थं पारिभाषिकस्यासम्भवादिति परिभाषयैव सर्व्वत्र निर्वाहे उपधाग्रहणं क्वापि न कार्य्यमिति चेदत्रोच्यते । अन्त्यविकारे इति परिभाषायामुदात्तनिर्देशः क्रियते प्रतिविधेयं प्रवर्तते तत्फलन्तु तिङ्ङतिङ इत्यत्र नास्याप्रवृत्तिस्तेन देवदत्तोऽभवदित्यत्र पूर्वस्यानुदात्तत्वसिद्धिः विकाराकारस्यैव स्यादेवं च प्रकृते उदात्तनिर्देशाभावेनास्या अप्रवृत्तौ पकाराकारस्य दीर्घः स्यादेव तद्व्यावृत्त्यर्थमुपधाग्रहणमिति शेखराशयः ॥ नसंयोगाद्वमन्तात् ॥ वान्तमान्तसंयोगात्परस्यानो ऽकारस्य लोपो न स्यादित्यर्थे न कुत्राप्यनुपपत्तिः समाधानं मृग्यम् । भस्य टेर्लोपः । नन्वत्र भाड्डित् इत्येवसूत्रमस्तु । भसंज्ञाकात्पथ्यादेः परो यः सचाडित् इत्यर्थः । एवं च टेरिति टिलोपः अनुवृत्त्यर्थमपि न लोपग्रहणमेतदग्रेऽष्टाध्याय्यां गोतोणिदित्यादिसूत्राणां पाठदर्शनादत्र समाधानं मृग्यम् । गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः । तेन व्या

ध्री कच्छपी अश्वक्रीतीत्यादौ सुबुत्पत्तेः प्रागेव समासे विशिष्ट-स्य जातिवाचकत्वेन जातेरस्त्रीविषयादिति ङीष् अन्यथा स्वार्थादीनां सुपुस्थितौ सत्यां लिङ्गबोधकटापि ततः सुबुत्पत्तौ ततः समासे ऽदन्तत्वाभावात् ङीष् न स्यात् । अत्रायं पूर्वपक्षः । इयं परिभाषा मास्तु उपसञ्जनिष्यमाणनिमित्तो ऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधतइत्यनया दधतीत्यादौ यथा पूर्वमन्तादेशो न भवति एवं प्रकृते ऽपि टाप् न भवति । न चादभ्यस्तादित्यस्यानवकाशत्वमिति वाच्यम् । जक्षतीत्यादौ चारितार्थ्यात् । न च गतिकारकेति परिभाषाया अभावे कौम्भकारयो न स्यात् सुबन्तेन समासे कारशब्दान्ङीप् स्त्रीभ्यो ढगिति सूत्र स्य स्त्रीप्रत्ययान्तात् ढगिति नार्थः । किन्तु स्त्रीवाचका ढ्ढगित्येवार्थः । अतएव मातृष्वसुर्ढकि टिल्लोपवचनं चरितार्थम् । अन्यथा स्त्रीप्रत्ययान्तत्वाभावाड्ढको दुर्लभत्वेन तद्व्यर्थं स्यात् । अत एव कृष्यन्धकेति सूत्रे भाष्ये जम्बुशब्दश्चतुष्पादजातिवाचकस्तस्माच्च इति ढञि प्राप्ते स्त्रीभ्यो ढगिति ढक्प्राप्तः तत्र पूर्वविप्रतिषेधेनेत्युक्तं तदसङ्गतं स्यात् जम्बुशब्दस्य स्त्रीप्रत्ययान्तत्वाभावात् स्त्रीभ्यस्तु न ढक् अनभिधानाच्छिवादिपाठाद्वा अत्र समाधाने विभावयन्तु सुधियः ॥ मापवपनीत्यादौ णत्वं न स्यात् न कारस्य प्रातिपदिकान्तत्वाभावादिति समाधानम् । अर्थवद्ग्रहणे नानर्थकस्य अत्र व्रश्चादिसूत्रे राजेः पृथक् भ्राजिग्रहणं ज्ञापकमिति मनोरमायां दीक्षितैरुक्तं तद्विपरीतं तु शब्दरत्ने भट्टैरुक्तं व्रश्चादिसाहचर्य्येण धातुसंज्ञस्यैव राजेर्ग्रहणम् एवं च भ्राजन्तर्गतस्य राजेर्धातुत्वाभावेन तत्र षत्वासिद्धिरिति ज्ञापकत्वमयुक्तम् । अत्रेयं शङ्का यद्यत्र साहचर्य्यपरिभाषाप्रवृत्तिरिष्टा तर्हि शकारवच्छकारविषये ऽपि साप्रवर्तेत एवं च

शकारान्तस्य धातोरेव षत्वं स्यात् तदा निशाशब्दस्य निशादेशे निड्भ्यां निड्भिरित्यादौ षत्वानापत्तिस्तस्मान्मनोरमोक्तमेव सम्यक् वस्तुतस्तु साहचर्य्यपरिभाषाप्रवृत्तावमुं दोषं विभाव्यैव शब्दरत्नग्रन्थे किञ्चे त्यादिना युक्त्यन्तरमुक्तं तच्च ऋकारानुबन्धस्य राजग्रहणेन भ्राजन्तर्गस्य राजेर्न ग्रहणम् अत्र ऋकारस्य समुदायानुबन्धत्वात्समुदायानुबन्धस्यावयवानुबन्धत्वाभावात् इति न काप्यनुपपत्तिः । अथ वा प्रथमोपात्तत्वाद्व्रश्चादिविषयएव साहचर्यपरिभाषाप्रवृत्तिः शकारवच्छकारविषये सा न प्रवर्ततइति न किञ्चिद्दूषणं निड्भ्यां निड्भिरित्यादीनामिष्टत्वात् अर्थे प्रथमेत्येव सारं । तत्र कस्यार्थ इति जिज्ञासायां यस्मात्स्वादिविधिस्तस्यार्थ इति फलितम् । एवं च मृडानीहिमानीत्यादौ पुंयोगमहत्त्वादेः ङ्यतान्नियतभानेन प्रथमा सिध्यतीत्यपरमनुकूलं यथाश्रुते तु सा न स्यादिति मनोरमा ग्रन्थः एतदुपरीयमाशङ्का प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषया मृडानीहिमानीति प्रातिपदिकं तस्मात्पुंयोगादीनां नियमेन भान मिति कथं प्रथमाया अनुपपत्तिः । अत्र शब्दरत्नग्रन्थः प्रवृत्तिनिमित्तं तदाश्रयश्च प्रातिपदिकार्थः तदपेक्षया लिङ्गमात्रं यत्राधिकं भासते तत्र प्रथमेति वाक्यार्थः । मृडानीत्यादौ न लिङ्गमेवाधिकं भासते किन्तु पुंयोगोऽपि एवं च प्रथमा न स्यादिति तदाशयः । तदपि चिन्त्यमेव मनोरमाकारमते प्रवृत्तिनिमित्ततदाश्रयस्याप्रातिपदिकार्थत्वादिति विभावनीयम् ॥ न मुने अत्र न नेत्येवास्तु नामि अत्र नुटीत्येवास्तु यत्र नुटि दोषस्तत्रागमान्तरकरणेन परिहरणीयः । अदर्शनं लोपः । अत्रादर्शनमित्येवास्तु तस्य लोप इति सूत्रं मास्तु । बहुवचने झल्येत् इत्येव सुवचम् ॥ आसुडा-

गम इत्यपि तथा पदान्ताद्वा विशेषणविशेष्यभावेनान्ते लब्धेऽन्तग्रहणं पदविधित्वबोधनद्वारा समर्थपरिभाषानुपस्थित्यर्थं तेन तिष्ठतु कुमारीच्छत्रं हर देवदत्तेत्यादौ न विकल्पस्तुक् इत्यत्र शेखरे उक्तं युष्मत्प्रकरणस्थौदनं पच तव भविष्यतीति प्रतीकस्थसमर्थपरिभाषा त्वत्र न प्रवर्तते तस्या एकार्थीभावविषयत्वादितिशेखरविरोधात् अत्र विरोधं परिहरन्तु विचक्षणाः । तस्मिन्नितिनिर्दिष्टेपूर्वस्य । अत्र सप्तमी निर्दिष्ट इति तु न सूत्रितं सप्तम्यां जनेर्ड इत्यादौ सप्तम्यन्ते पदे इत्यर्थापत्त्या जायते ग्रामे देवदत्त इत्यनिष्टापत्तेः । न च स्वं रूपमिति परिभाषया सप्तमीवाच्यप्रत्ययान्तार्थे परे पूर्वस्य कार्यं स्यादित्यर्थोऽङ्गीक्रियते तत्र च पूर्वस्य स्थाने कार्याभावात्सप्तमीत्वाच्चाप्रवृत्त्या न दोषः । अत्र न्यासे दोषेऽपि ङिप्रत्ययमारभ्य सुपः पकारेण ङिप् प्रत्याहारमाश्रित्य ङिप्निर्दिष्टे पूर्वस्येति न्यासः सुवचः ॥ अदस औसुलोपश्च । अदसः सोर्डाविति तु न सूत्रितम् । टिलोपे कृते नित्यत्वात्सत्त्वं बाधित्वात्यदाद्यत्वेऽसावित्यसिद्धिरिति शेखरे उक्तम् । तदसङ्गतम् तथा हि डौ आदेशः त्यदाद्यत्वापवादः सत्यपि सम्भवे इति न्यायेन एवञ्च टिलोपापेक्षया परत्वात्सत्त्वे पुनः प्रसङ्गविज्ञानात् टिलोपे असाविति सिद्धिः सकृद्गतिन्यायाङ्गीकारे तु टिलोपे नित्यत्वात्सत्वे कृते तदोरिति सूत्रे सकृद्गतिन्यायेनादस इति विभक्तिसत्त्वविधायकानियमेन भाष्ये अनत्यग्रहणप्रत्याख्यानेन सत्त्वासिद्ध्या अदोषात् । अदसस्सोर्लोप इत्येवास्तु न चासकौ स्त्रीत्यादौ प्रत्ययस्थादितीत्त्वप्रसङ्गः । णित्वसामर्थ्यात्पूर्वम्प्रवृद्धावदन्तत्वाभावादापोऽप्रसक्तेः ङीपि असिद्धत्वं णित्वसामर्थ्यादेव न पूर्ववदश्ववडवौ द्विर्वचनतन्त्रमिति प्रतीकमुपादाय तदयुक्तम् । अत एव पूर्ववदिति चरितार्थमन्य-

थाश्ववडवाविति निपातनात्सिद्धेः किन्तेन समुदायस्य पूर्वपद-लिङ्गत्वेऽपि उत्तरपदाद्ययोनिवृत्तिरश्ववडवपूर्वपराधरोत्तराणा-मिति निर्देशात् अश्ववडवाविति तु समुदायस्यान्तत्वाभाच्छी-भावाप्राप्त्या वृद्ध्यासिद्धम् । अश्ववडवशब्दार्थः पूर्वपदालिङ्गं ल-भते इत्यर्थे पुंस्त्वविधानप्रयोगे चरितार्थम् । सुन्दराश्ववडवा-वित्युक्तमुद्देश्यतावच्छेदकाक्रान्तत्वेन स्वास्मिन्स्वप्रवृत्तिरिति न्या-येनानेनैव वात्र समाहारद्वन्द्वे कृते सनपुंसकमित्यत्र तच्छब्देनैत-द्विहितसमाहारद्वन्द्वे परामृष्टे तत्र च पश्चाश्ववडवाविति स्यात्तदे-तद्विहितसमाहारद्वन्द्वविषयकं सनपुंसकमिति ह्रस्वत्वे निर्देशोप-पत्तिः इतरेतरयोगे साहित्यस्य विशेष्यवर्तिपदार्थस्य प्रकारत्वे प्रत्ययग्रहणपरिभाषा तदा नियमेऽपि आवन्तात् परस्याङ्गसञ्ज्ञा-निमित्तस्य औङः शी आवन्तात् परस्य शीत्यर्थे वा श्यादेशो दुर्वारः प्रकृतेऽत एवाधिकसंख्येत्वादिनिर्देशाः खट्वाया अर्द्धेऽर्द्ध-खट्व घटखड्गेत्यादिलौकिकप्रयोगश्च सङ्गच्छते अत्र समाधान-मूहनीयम् । न लोपः सुप्स्वरसंज्ञातुग्विधिषु कृति । अत्र सूत्रे शेखरकृतोक्तम् संज्ञायां दत्तदण्डिनौ दण्डिदत्तौ अत्र नलोपे दण्डिन्शब्दस्य घित्वेन पूर्वनिपातापत्तिरिष्यतेत्वनियमः अ-सिद्धत्वे तु घित्वाभावात्सिद्ध्यति न च पूर्वनिपाते नलोपो न-लोपे च पूर्वनिपात इत्ययुक्तं यस्य पूर्वपदत्वे घित्वं भावि तत् पूर्वमेव प्रयोक्तव्यमित्यर्थान्न दोष इति तु न द्वन्द्वे घीत्यत्र घिपद-स्य भाविघित्वे लक्षणायाम्मानाभावेन सम्प्रति घिसंज्ञकं पूर्वं प्रयोज्यमित्यर्थे सम्प्रति दण्डिन्नित्यस्य घित्वाभावादनियमेन रूपद्वयसिद्धौ प्रकृते सञ्ज्ञाग्रहणं त्याज्यम् ॥ ननु लाक्षणिक-पदानङ्गीकारे हरिच्छत्रमित्येकमेव तत्र लक्षणास्वीकारेऽग्रे हरि-शब्दस्य भाविनातुका इकारान्तत्वाभावेन घित्वस्यासपत्स्यमा-

नत्वादनियमः सिद्ध्यति तथा च हरिच्छत्रेच्छत्रहरी इति रूप-
द्वयम् अन्तरङ्गेघित्वे तुकोऽसिद्धत्वे हरिच्छत्रे इत्येकमेत्र षत्व-
तुकोरित्यत्र तुग्ग्रहणे लुकि अन्तरङ्गपरिभाषया अप्रवृत्तिरतो
नियमे रूपद्वयम्। किं चात्र प्राचीनमते अन्तरङ्गपरिभाषाया-
सिद्धत्वे वा एकरूपनिर्वाहः माणिकलशौ इत्येकघिपदे लक्षणा-
ङ्गीकारे तद्भावे सम्प्रति घित्वाभावादनियमे रूपद्वयं स्यात् तद्धि
घित्वे कर्तव्ये उत्तरपदनिमित्तकह्रस्वस्यासिद्धत्वे घित्वस्याप्रवृत्तौ
रूपद्वयम् अथ वा लक्षणहेत्वोः क्रियाया इति निर्देशेन द्वन्द्वे घि-
त्वस्य अनित्यत्वाङ्गीकारस्त्वयाप्यवश्यंकर्तव्यः इत्थं सति द-
ण्डिनावित्यस्य सिद्धिर्निष्प्रत्यूहा इति कृतमिति समाधानं वि-
दाकुर्वन्तु कृतबुद्धयः॥ यासुट् परस्मैपदेषूदात्तो ङिच्च। अत्र-
यामपरस्मैपदेष्वित्येवास्तु। पदद्वयं त्याज्यम्। अत्र सूत्रे
लिङ धातो राक्षेपे शपि कृते यासुनिरवकाशस्तेन शप्बाधकः
यास् पूर्वप्रवर्तते पश्चादुत्सर्गो ऽपि भवति अक्षिप्तस्य शाब्दबो
धे ऽन्वये तु सत्यपि सम्भव इति न्यायस्यानित्यत्वे सत्यपि-
संभवस्थाने यत्र बाधस्तत्रापि कचिदुत्सर्गः प्रवर्तते तेन प्रकृते-
यासि कृते शप् भवतीति तदनित्यत्वज्ञापकः सो ऽचीत्यादि-
निर्देशः अन्यथा त्यदाद्यत्वाप्राप्तियोग्ये ऽचरितार्थम् अत्वे कृते
ऽपि सत्वं भवतीत्यतः सत्वं त्यदाद्यत्वापवादकं तद्विषये त्व
प्राप्त्या सदइति स्यादतो ज्ञापको ऽयं तदनित्यत्व किदाशि-
षीत्यस्यानन्तरं लिङ्यार्द्धधातुकमिति कर्त्तव्यं पूर्वसूत्रात्पदद्व-
यमनुवर्त्याशिषि लिङ्परे यास् आर्द्धधातुकसंज्ञ इत्यार्धधा-
तुकसंज्ञाविधानसामर्थ्याच्छासो धात्वधिकारोक्तत्वाभावे ऽपि
आर्द्ध धातुकसंज्ञा भवतीति भवतेर इत्यादिनिर्देशात् कर्त्रर्थक-
त्वाभावे ऽपि क चित्सार्वधातुके शप् भवतीति ज्ञापनात् तेन

निरर्थकयासि परे ऽपि शपूसिद्धः । एवञ्च जागर्य्यादित्यादावपि विशेषविहितेन किंत्त्वेनातिदेशिकस्य सार्वधातुकमपिदिति ङित्त्वस्य बाधो ऽतो ङिद्भिन्नप्रतिषेधविषयत्वाद्गुणः सिद्धः समाधिमत्राकलयन्तु सूक्ष्मार्थदर्शिनः ॥ अल्लोपो नः ॥ अत्रानो नश् इति सूत्रमस्तु । न च प्रियाष्ट्न इत्यादावल्लोपे तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति वार्तिकेन स्थानिवद्भावात् ष्टुत्वं न नशादेशे तु अज्झलादेशत्वात्स्थाकृत्यां नुपसर्जनादित्यस्य साफल्ये सति ङीपि सुलोपे लक्ष्मीत्यपि कथं तदन्तविधौ ज्ञापकतेति स्त्रियामिति सूत्रे भाष्ये उक्तम् । तत्र लक्ष्मीशब्दे आचारक्विपो ऽनभिधाने ऽनुपसर्जनादिति सूत्रं तदन्तविधिं ज्ञापयतीति ह्रस्वनद्येति सूत्रस्थभाष्येण सह स्त्रियामेतदिति भाष्यविरोधलेशो ऽपि हलन्तेभ्यः सामान्यानभिधाने ऽपि आचारक्विवन्तप्रकृतिककर्तृक्विपः एतेन भाष्याशयमबुध्वा नेत्रे निमील्य व्याचक्षाणेनान्तरङ्गानपीति परिभाषेन्दुशेखरश्चिन्त्य इति परास्तम् ॥ न पदान्तद्विर्वचन अत्र सूत्रे वेतस्वानित्यादिशेखरेण लोपः शाकल्यस्येति सूत्रे अशिक्षिमित्यादि किञ्च स्थानिवत्त्वानिषेधं विनास्य पदान्तत्वासिद्ध्यात्र निषेधाप्रवृत्तिः स्थानिवत्त्वनिषेधज्ञाने तन्निर्णये च स्थानिवत्त्वाभावाज्ञानमित्यन्योन्याश्रयस्तत्राप्रवृत्तौ बीजमित्यन्तः शेखरो विरुद्धोपादान इति सिद्धे पदान्ते ह्यत्र निषेधः स्थानिवद्भावे सति यः पदान्त इति यावत् । यथा कानि सन्तीत्यादौ वेतस्वानित्यत्र स्थानिवत्त्वेन हि पदान्त इति अत्रार्थे समादधतु कुशाग्रबुद्धयः उत्तरखण्डस्यैव धातुत्वामिति शेखरे प्रयत्नश्चेत्यादि प्राग्धातोरित्यनेनोत्तरखण्डात्पूर्वमुपसर्गाप्रयोगः स्यादिति दूषणं न ॥ स्थादिष्व-

१ अत्र ग्रन्थत्रुटिः । प्रतिभाति ।

भ्यासे न चाभ्यासस्येति सूत्रेणोपसर्गात्परेषामेव नान्येषामिति सूत्रवैयर्थ्येनोपसर्गा अभ्यासात्पूर्वमेव प्रयोक्तव्या इति ग्रहीज्यावयिव्याधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च अत्र सूत्रे वयिग्रहणं न कर्तव्यं व्येञः सत्त्वाद्वचिस्वपीत्येव सिद्धम्। वेञ इति निषेधस्तु लिटि वयो इतिज्ञापकान्नेति बोध्यम् । ब्रह्मभट्टैरुक्तम् समाननिमित्तकस्यैव त्रैपादिकस्य ग्रहणेनादोषात्तत्रार्थे प्रमाणं न दृश्यते । भाष्यादिकं केवलविरोधपरिहारायैवेदमुक्तम्। समाधानमत्र विभावयन्तु सुधियः ॥ शर्परे विसर्जनीयः। अत्र मनोरमायां शर्परे नेत्युक्तेऽनन्तरत्वात्। सत्वस्यैव बाधकंस्या न्नतु ᳲकᳲपयोस्तथा च वासः क्षौममद्भिः प्क्षातामित्यत्र द्वौ दुर्वारावित्युक्तमिदञ्च न सम्भवति कुप्वोरिति सूत्रं शर्परे एतद्विषये ᳲकᳲपसम्पादनेन चरितार्थम् कः करोतीत्यादौ सत्वजिह्वामूलीयादिप्रसङ्गे सत्वदृष्ट्या ᳲकᳲपयोरसिद्धत्वात्सत्वंस्यादित्याशङ्क्य शर्परे नेत्यनुवर्त्य शर्परयोः कुप्वोस्तु ᳲकᳲपौ नेत्यर्थेन प्रकृते दोषाभावः । किञ्च शब्दबलेन विसर्जनीयस्य सोऽशर्पर इति सूत्रे ऽपि कुप्वोरिति सूत्रे अशर्पर इत्यनुवृत्त्या तयोरशर्परे प्रवृत्त्या चाद्विसर्ग इत्यर्थलाभानापत्तिरित्युक्तम् तत्र विसर्जनीयस्येत्यनुवर्त्य तच्चावर्त्योत्तरसूत्रे ᳲकᳲपाविति प्रथमान्तसाहचर्येण प्रथमया विपरिणम्य चाद्विसर्ग इत्यर्थः सुलभः॥ यासुट् परस्मैपदेष्वितिं सूत्रेङिच्चेति विहाय ङ्यासुट् परस्मैपदेषूदात्त इत्येव तु न सूत्रितम् । तथा सति किदाशिषीत्यातिदेशिकस्य कित्वस्य इज्यादित्यादौ सम्प्रसारणसम्पादनेन चारितार्थ्याज्जागर्य्यादित्यादावौपदेशिकङित्वस्य विशेषविहितेनातिदेशिकेन कित्त्वेन बाधस्य वक्तुमशक्यत्वात् ततश्च जाग्रोतीति सूत्रेण गुणो न स्यात् विचिणल्ङिङ्क्षो ऽन्यस्मिन्वृद्धिविषये प्र-

तिषेधविषये चेति सिद्धान्तात् मम तु नायं दोषः आतिदेशिकेन विशेषविहितेन कित्वेनातिदेशिकस्य ङित्वस्य बाधो वक्तुं शक्यते । न चैवमपि क्यासुटि कृते किदाशिषीति सूत्रं मास्त्विति लाघवमिति वाच्यम् । विधिलिङ्यपि वच्याज्जागर्य्यादित्यादौ संप्रसारणगुणौ स्यातामित्यलं बहुना ॥ डाबुभाभ्यामन्यतरस्याम् ॥ अत्रसूत्रे मनोरमायामन्यतरस्यामिति योगं विभज्य बहुधीवरीत्यादिरूपं संसाध्य बहुव्रीहौ वेति वचनमुक्तम् योगविभागसिद्धं न तु पाणिनिकृतं सूत्रमित्युक्ता भाष्ये तु सूत्रभङ्गेन समाहितं तद्यथा अनो बहुव्रीहेरित्यस्यानन्तरम् उपधालोपिनो वेति सूत्रमस्तु अन उपधेति प्रदेशान्तरस्थं सूत्रं डाप्सूत्रे ऽन्तरस्यां ग्रहणं मास्त्विति चोक्तम् । अत्र चेत्यस्यानन्तरं मनोरमायां प्रतीकमुपादायानो बहुव्रीहेर्डाबुभाभ्यामनुपपसर्जनादुपधालोपिनो वेति पाठ्यमिति भावः । यथाश्रुते ऽनुपसर्जनादित्यस्य संबन्धो दुर्घटः अत एव उद्दामानि पुराणान्यतिक्रान्ता नगरीत्यत्र ङीन्नेति चोक्तं शब्दरत्ने । अनउपधेति सूत्रे शेखरे ऽनुपसर्जनादित्यनुवृत्तमन्यत्र न सम्बध्यते तस्य गृह्यमाणविशेषणतया गृह्यमाणस्यानो बहुव्रीहावनुपसर्जनस्यासम्भवात् ध्वनितं चेदं वनो रचेति सूत्रे भाष्ये तत्र ह्यनो बहुव्रीहेरित्यस्यानन्तरमुपधालोपिनो वेति न्यासो दर्शित इति चोक्तम् । उभयोः परस्परविरोधः स्पष्ट एवेति विरोध परिहरन्तु शाब्दिकाअनुपसर्जनात् अधिकारो ऽयं यूनस्तिरित्यभिव्याप्य अयमेव स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयतीति मूलग्रन्थस्त्वाचारक्विबन्तप्रकृतिककर्तृक्विबन्तानामनभिधानमेवैतद्भाष्यप्रामाण्यादिति शेखरस्तस्यायम्भावः यद्यप्याचारः क्विबन्तात्कर्तरि क्विप्युपसर्जनत्वमिति परं तु तत्रालोपस्यसत्वादकाराभावाट्टिड्ढेति सूत्रस्य

प्राप्त्यभावादेव ङीपोवारणं भविष्यतीत्यनुपसर्जनादित्यस्यात्रो-
पयोगाभावाद्भाष्यकारोक्तज्ञापकता सुस्थितेत्याचारक्किबन्तप्रकृ-
तिककर्तृक्किपो ऽनभिधानाभावादेतादृशलेखनस्योपयोगाभावा-
च्छेखरो अनड्वानिवाचरति इत्यर्थे अनडुहशब्दाद्गौरादिपठिता-
दाचारक्किबन्तात्कर्तरि क्किप्यनुपसर्जनादित्यस्य फलं स्पष्टमेवेति
भाष्यकारोक्तज्ञापकता विरुद्धा अतो ऽनभिधाने एतद्भाष्यस्यैव
मानत्वाल्लेखनस्य चेदानीमुपयोगः स्पष्टएवेति शेखरः संगच्छते।
न चैवमपि ह्रस्वनद्येति सूत्रे कस्यामो ग्रहणमित्याशङ्क्य कासृप्रत्यये-
तिविहितस्य सानुबन्धकत्वादित्युक्त्वा तत्रामो मित्त्वादथ वा
फलाभावाद्धल्ङ्याब्भ्यो यद्यचारक्किप् सम्भवति तर्हि मिद-
चोऽन्त्यात्परविषयविशेषसत्वादुक्तनुड्विधायकशास्त्रस्थभाष्यासङ्ग
तिः स्पष्टैवातो हलन्तेभ्यस्सामान्यत आचारक्किप् नास्तीति क्लृप्त
एव इति स्त्रियामिति सूत्रस्थ भाष्यप्रामाण्यादिति शेखरो विरुद्ध
एवेति वाच्यम् । नुड्विधायकसूत्रस्थेन भाष्येण लिङ्ग् आचार-
क्किप् एव हलन्तेभ्योऽनभिधानं तत्रैवामः प्रवृत्तिसत्वात्कर्तृक्किप्
परस्य तस्य तेभ्योऽनभिधानं मानाभावादेतेनान्तरङ्गानपीति
परिभाषाज्ञापनावसरे सामान्यतो हलन्तेभ्यो नुड्विधायकसूत्र-
स्थभाष्यप्रामाण्येनाचारक्किप् नास्तीति परिभाषेन्दुशेखरोक्तिरु-
गिदचामितिसूत्रे । आचारक्किप्प्राचीनमते न वस्तुतो हलन्तेभ्य-
स्तदभाव इति ह्रस्वनद्याप इत्यत्र भाष्ये स्पष्टमिति शेखरोक्तिश्च
चिन्त्येति विदां कुर्वन्तु सुधियः ॥ आचारक्किपि तु लक्ष्मी आ-
दिशब्दे कृदिकारादिति अक्तिनत्वाभावात् ष्टुत्वं स्यादिति-
वाच्यम् । प्रियाष्टनशब्दे परे तु स न इति शेखरपर्यालोचने
तदभिधानस्यैव लाभात् विभावयन्तु समाधानं ज्ञातभाष्याशया
भिसन्धयः ॥ अचः परस्मिन् पूर्वविधौ ॥ अच एवादेश इत्यर्थः।

तेन मरुतमाचष्टे मारयतीत्यादौ न स्थानिवद्भावः । अत्र प्रयोगे योऽच्स्थानिको न तु सूत्रे उपात्ताच् स्थानिक इत्यर्थः । तेनाजादेरनेन स्थानिवत्त्वम् । अत एव चङ्परनिर्ह्रास इति स्थानिवत्वनिषेधो वादितवन्तं प्रैरीदवीवददिति सिद्ध्यर्थं सार्थकमित्युक्तमत्र शेखरे जुहुत इति प्रतीकमुपादाय श्लौस्स्थानिवत्वेन श्नुत्वमादाय न गुणः अपरनिमित्तकत्वादज्ादेशत्वाभावाच्चेति तेनैवोक्तमिदपरस्परविरुद्धम् । णिलोपादिस्थलेऽनुत्पत्तेरेवान्वाख्याने वारिआख्यत् अवीवदित्यादौ टेरिति सूत्रेऽपि स्थानिवत्त्वप्रतिषेधकं चङ्परनिर्ह्रासेति वार्तिकं सार्थकमतोनवार्तिकेवैयर्थ्यमित्यपरमपि दूषणम् णिद्वयलोपो यथा जात्याश्रयणात्तथा ह्रस्वेऽपि जातेराश्रयणादवीवदादिति सिद्धे तथा च सूत्रे एवा चस्स्थानिक इत्यर्थेन सर्वेष्टसिद्धिरिति णिलोपादेरित्यत्रातद्गुणबहुव्रीहिणा टिलोप इत्यर्थाश्रयणेऽपि निर्वाहः । सूत्रेऽप्यचस्स्थानिकत्वादत्राकलयन्तु तत्त्वं नागेशभट्टानुयायिनः ॥ पिपठीरिति प्रतीकमुपादाय रुत्वेऽल्लोपो न स्थानिवत् पूर्वत्रासिद्धे तन्निषेधात् इति शेखरोक्तं न पदान्तसूत्रे पदे अन्त इति सप्तमीसमासव्याख्यानपरभाष्यप्रामाण्यात्पूर्वत्रासिद्ध इत्येतत्तत्पदचरमानतिरिक्तत्रैपादिकग्रहणे रुत्वे स्थानिवत्त्वं भवत्येवेति शेखरेण सह विरुद्धम् । तत्र समाधानं वेञश्चान्यतरस्याम् वेञ इति सूत्रादग्रेऽन्यतरस्यां कितीत्येव सम्प्रसारणविकल्पेन सिद्धे श्रश्चेतिसूत्रं व्यर्थं परत्वादतो लोपे सम्प्रसारणे जाते वार्णपरिभाषया पूर्वं बाधित्वाल्लोपस्यैव प्राप्त्या तस्यापि नित्यत्वात् । न चोवाङि कर्तव्ये आभीयासिद्धत्वं तास्यानित्यत्वात्सम्प्रसाणाभावेन ववयिथेति सम्भाव्येनातो ल्यपि चेति चशब्देन लिटीत्यनुकर्षणाद् ववौ ववयिथेतिसिद्धमेवेति दिक् । अनिद्भका-

रिकाव्याख्यावसरे श्लिष्यतीति प्रतीकमुपादाय श्यना निर्देशः श्लिषअलिङ्गनइति सूत्रभाष्यप्रामाण्यात्तद्विशेषइति विभक्तौ विहितक्सस्य पुषाद्यङ्बाधकत्वमुक्तम् । अनिट्इत्यनुवर्तनाद्दाहार्थस्य सेटोग्रहणाभाव इति कैयटे इत्युक्तम् ॥ अत्रायं पूर्वपक्षः ॥ श्लिष इतियोगस्याङ्बाधकत्वम् यद्भाष्योक्तम् तदवष्टम्भेन कथं श्यन्विकरणस्यात्र पाठस्साध्यते एकाच् उपदेश इति सूत्रेऽनुदात्तपरिगणनावसरे विश्लिष्ट इत्येव पठितव्य दाहस्यात्यनिष्टत्वे बाधाभावान्नहि दाहार्थस्यसेट्कत्वाङ्गीकारं विना तत्सूत्रभाष्योपपत्त्यभावः उभयोरनिट्कत्वे दाहार्थस्य पुषादित्वे तदंशेऽङः प्राप्त्यभावेन प्रतिप्रसवार्थे श्लिष इति योगे फलत्वे दाहार्थग्रहणे पुषादेरग्रहणेन बाधकत्वोक्तेः सार्थकत्वात् । य चोभयोरनिटकत्वे दाहार्थकर्मणि चिणः प्राप्तस्य बाधः श्लिष इत्यस्यसार्थक्येन पुषादिपाठबलप्राप्तस्यालिङ्गार्थश्लिष्यतेरन्यत्र पाठेनापि सिद्धौ पुषादिपाठेन श्लिषग्रहणं रूपसामर्थ्यप्राप्तस्याङः श्लिष इति विभक्तेन बाधानापत्तौ अङ्बाधकत्वासङ्गतिः दाहार्थस्य सेट्कत्व तु श्लिष इति विभक्त अनिट् इत्यनुवृत्त्या तद्ग्रहणे परिशेषात्पुषादिपाठप्राप्ताङ्बाधकत्वस्य वाच्यतया पर्यायेणाङ्क्सयोः श्रवणस्य वक्तव्यतया पाक्षिबाधमादायाङ्बाधकत्वोक्तिरिति वाच्यम् । दाहार्थस्य सेट्कत्वेनामिति इत्यनुवृत्त्या तद्ग्रहणाभावे ऽपि पुषादिविषये ऽपि चिणा बाधकेन चरितार्थस्य विभक्तस्य पुषाद्यङ्बाधकत्वानापत्त्या च पुरस्तादपवादन्यायेनाङि बाधकत्ववत् दाहार्थस्यानिट्कत्ववादिनो ऽपि चिण्बाधबोधनार्थत्वेन दाहार्थस्थले तद्बाधायोगेनात्र बाधकत्वस्य समापि सम्यक्त्वादिति चेन्नैवम् । विभक्ते दाहार्थके चिण्बाधनं फलमुत पुषाद्यङ्बाधकत्वमिति संशये पुषाद्यङ्बाधकत्वकल्पने

पूर्वोक्तरीत्या विकल्पापत्त्या चिणग्रहणस्य नित्यार्थतापत्त्या भाष्यासङ्गत्यापत्तेरिति दिक् । यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते आने मुग्विधानसामर्थ्यादेषा ऽनित्या अन्यथा पचमान इत्यादौ चकारस्य मुकि अनया परिभाषया विशिष्टस्य सवर्णदीर्घे तद्वैयर्थ्यं स्पष्टमेवेत्युक्तं परिभाषेन्दुशेखरे तन्न युक्तम् । अकारयोः कण्ठस्थानित्वं मकारस्योष्ठस्थानिकत्वेन तत्र जायमानो दीर्घः कण्ठोष्ठस्थानिक ओकार आँकारो वा भविष्यति सूत्राभावे तु स न सिध्येदिति सूत्रवैयर्थ्याभावेन ज्ञापकता न सम्भवति किञ्च शानचस्सार्वधातुकमपिदिति ङित्त्वात्प्राप्तस्यातो ङितः इतीयादेशस्य सूत्राभावे वारणस्याशक्यत्वात्तत्सत्त्वे तु येन नेति न्यायेन तद्वारणादिति ज्ञापकता न सम्भवतीति न तु अकारस्य कण्ठस्थानिकत्वेन तत्र जायमानस्योक्तवत् परिभाषया कण्ठस्थानित्वस्याप्यतिदेशादागमे आगमिधर्मवैशिष्ट्यमपि बोध्यतइति सिद्धान्तात् । किञ्चाकारयोः कण्ठस्थानिकयोर्मात्राद्वयं तन्मध्ये प्रविष्टस्य मकारस्यार्द्धमात्रिकत्वेन मल्लग्रामादिवद्भूयसाव्यपदेशाज्जायमानो दीर्घ आकार एव भविष्यति इयादेशबाधकस्त्वातो ङित एवास्याग्रे आनस्य नेति न्यासेन सिद्धिरिति ज्ञापकता सम्भवत्येवेति नवीनग्रन्थश्रद्धालवो रटन्ति ॥ ङमो ह्रस्वादचि ङमुण्नित्यम् ॥ अत्र शेखरकृता पदान्तावयवङमः परस्याजादेः पदस्य ङमुडिति भाष्योक्तसिद्धान्ते ऽर्थे परमदण्डिनावित्यादौ न दोषो मूलोक्तार्थाङ्गीकारे त्वन्तर्वर्तिविभक्त्या दण्डिन्नित्यस्य पदत्वान्ङमुट् स्यादुत्तरपदत्वे चेति प्रत्ययलक्षणनिषेधस्तु न माषकुम्भवापेनेत्यादौ पदव्यवाये ऽपीति निषेधसिद्ध्ये तस्य यत्रोत्तरपदस्य कार्यित्वं तत्रैव प्रवृत्तेस्तेन सिद्धमित्येतत्सूत्रस्थभाष्योक्तिस्त्वेकदेशिन इत्युक्तं तद्वि-

रुद्धम् । पूर्वदण्डिभिय इत्यादौ नलोपार्थं वार्तिके मध्यमपदत्वानाक्रान्तोत्तरपदग्रहणावश्यवक्तव्यत्वाच्छेखरकृता समासाश्रये उक्तत्वाच्च माषकुम्भवापेनेत्यादावपि प्रत्ययलक्षणनिषेधाप्रवृत्तेः सूपपादत्वात्पदव्यवाये ऽपीति निषेधेन सिद्धमित्येतत्सूत्रस्थभाष्योक्तं च संगच्छते मध्यमेति विशेषणे उक्ते ऽपि पञ्चगवधन इत्यादौ प्रत्ययलक्षणे सत्यत्राङि यस्येति लोप रूपासिद्धिः सोऽपदादौ । अत्र सः प्रत्यय इति न्यास एव सुवचः । न चोरः कायतीति विग्रहे सुबुत्पत्तेः पूर्वं समासे उरस्केनेत्यादौ सत्वं न स्यादेवेति वाच्यम् । अन्यस्यासंभवे इति मनोरमाप्रतीकमुपादाय उपदेशे इत्येव कुप्वोरित्यनुवर्त्त्य यस्मिन विधिरिति तदादिविधौ कवर्गादावपदे इत्यर्थेन सिद्धे आदिग्रहणमपदस्यैवादिरित्यर्थलाभापत्तेर्नोरस्केनेत्यादौ सुबुत्पत्तेः पूर्वं समासेन सत्वमादिग्रहणसामर्थ्यलब्धावधारणेन पदत्वयोग्यप्रातिपदिकावयवकुप्वोर्ग्रहणमिति शब्दरत्नकृतोक्तत्वाद्यथान्यासे ऽपि सत्वं नेष्यत इति न क्वापि दोषः । तथा युक्तं चानीप्सितम् । अनीप्सितपदाभावे ईप्सितप्रकर्षहीनस्याप्यनेन संज्ञाप्राप्तौ वारणार्थानामित्यस्यानवकाशत्वं स्यादिति प्रकृतसूत्रे शेखरकृतोक्तम् । तदयुक्तम् । पूर्वसूत्रे तमब्ग्रहणादीप्सितपदेन प्रवर्तते ईप्सिततमे तु पूर्वसूत्रारम्भसामर्थ्यादेव न प्रवर्तते अर्थादीप्सित एवैतस्य विषये इति वारणार्थानामित्यस्यानवकाशत्वादग्नेर्माणवकं वारयतीत्यादौ न काप्यनुपपत्तिरत एव मनोरमायाम् अनीप्सितग्रहणं स्पष्टार्थं न त्वावश्यकमित्युक्तम् ॥ अभिनिवेशश्च । अत्र सूत्रे शेखरे अभिनिवेश आग्रहः सन्मार्गविषयक आग्रहवानित्यर्थ इत्युक्तं तदयुक्तं वैयाकरणमते क्रियाविशेष्यकशाब्दबोधाभ्युपगमादिति तन्न । आग्रहशब्दो ऽर्श आद्यजन्तः । स कर्ता यस्य व्यापारस्य स

आग्रहवान् व्यापार इति क्रियामुख्यविशेष्यकशाब्दबोध एवेति हेतुमति चेत्यादौ धर्मिवाचकान्मतुब्दर्शनादिति अस्मिन्नेव सूत्रे व्यवस्थितेति मूलप्रतीकमुपादाय परे तु इत्यादि आहुरित्यन्तमुक्तम् । तदयुक्तम् । एतद्दृष्ट्याषत्वासिद्धत्वादविकृतायाः श्रवणं ज्ञानमस्त्येवात एव श्रवणमित्युक्तम् । अथ वाविकृताया अविकरणस्थेत्यर्थ इति न काप्यनुपपत्तिरिति समाधानं कुर्वन्तु तदनुयायिन इति ॥ वृद्धिनिमित्तस्य च तद्धितस्यारक्ताविकारे । अत्र फलोपहितस्यैव निमित्तत्वेन विवक्षितत्वाद्वैयाकरणभार्ये न पुंवत्त्वनिषेध इति मूलप्रतीकमुपादाय वैयाकरणीभार्य इत्येव वृद्धिसंज्ञकौ एचौ भवत इत्यर्थात्फलोपहितग्रहणे फलम् ॥ अर्द्धप्रस्थकीभार्य्य इत्यत्र न ॥ अर्द्धात्परिमाणस्य पूर्वपदस्य तु वा ॥ अर्द्धात्परस्य परिमाणवाचकस्योत्तरपदस्य नित्यं वृद्धिः पूर्वपदस्य वा ञिति णिति किति च परे इति प्राप्ते नातः परस्येत्युत्तरपदवृद्धिनिषेधात् पूर्वस्य वैकल्पिकत्वेनाभावाच्चोपपादितं तन्न हीत्यादिना शेखरे उक्तम् तदयुक्तम् । अनेन निषेधाभावे ऽपि न कोपधाया इति निषेधसत्त्वात्तद्धितवुग्रहणमित्युक्तत्वे ऽपि तस्मादुपलक्षणमिदम् अर्द्धप्रस्थे भाव अर्द्धप्रस्थीभार्या यस्य तत्रापि अरक्तविकार इति पर्युदासेन तदन्ते ऽपि वृद्ध्यु त्पादनयोग्यत्वे सति यत्किञ्चिद्वृद्ध्युत्पादकत्वाभावे ऽत्र प्रयोगस्तथा च निमित्तग्रहणं मास्तु इति समाधानं सुधियो विभावयन्तु सर्वनाम्नः स्याड्ढ्रस्वश्च । आमि सर्वनाम्नः सुट् । अत्रायं पूर्वपक्षः ॥ अश्वक्षीरे सूत्रानन्तरं सर्वनाम्नोया सुट् तत आमि ततस्त्रेस्त्रय इत्येव कर्तव्यम् इदं च सूत्रद्वयं मास्तु उदीचामातः स्थाने यकपूर्वायाः । अत्रोदीचामातः स्थाने इत्येवास्तु तथा सति प्रतिपदोक्तपरिभाषया आ-

पाऽन्यतरस्यामित्यात्ग्रहणे आर्यिका आर्यकेत्यादिसिद्धिः । अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि । अत्र न तद्धितइत्येवास्तु लुग्ग्रहणं मास्तु प्रत्यासत्त्या तद्धिगोरेव तदन्तान्न ङीबित्यर्थे समाहारनिमित्तके द्विगौ पञ्चाश्वेत्यादौ निषेधो भविष्यतीति विभावयन्तु सुधियः ॥ गोरतद्धितलुकि । अत्र गोरलुकीति न सूत्रितं सामर्थ्यात् सामासिके प्रवृत्तावपि वक्ष्यमाणे धातुप्रयुक्ते लुकि टजनापत्तेः । ङितिह्रस्वश्च । वामि अत्र सूत्रद्वय वाचि ह्रस्व इति न सूत्रितम् । सुदन्मतीत्यादौ नद्यृतश्चेति कबापत्तेः श्रीणामित्यादौ संनिपातेति नुडनापत्तेश्च ॥ भवतेरः ॥ अत्र प्राचोक्तं भवतेरिति कर्तृनिर्देशाद्भावकर्मणोर्नात्वम् व्याख्यातं च तत्पौत्रेण कर्त्रर्थयोस्तिपा निर्देशादिति तन्न धातुनिर्देशमात्रे तयोर्विधानात् शपश्च विकरणत्वेनानर्थकत्वात् कर्त्रर्थे परे विहितस्य श्तिपः शित्वसामर्थ्यादेवेह प्रवृत्तेरिति मनोरमाग्रन्थः । अत्राशङ्कते श्तिपः शित्वस्यार्द्धधातुकव्यावृत्त्या चरितार्थत्वात् तेनार्द्धधातुकस्येडिति इडागमाभावः नच तत्र तितुत्रेतीण्निषेधः एवमपि ब्रवीतीत्यादौ हलादेः पितः सार्वधातुकस्य विधीयमानो ब्रुव इडित्यनेनेडागमो न स्यात् शित्वाभावेआर्द्धधातुकत्वात् उत्तरपदत्वे चेति वार्त्तिके पूर्वदण्डप्रिय इत्यादौ त्रिपदे बहुव्रीहौ कृते प्रियशब्दे उत्तरपदे परे तद्धितार्थोत्तरेति द्वयोस्तत्पुरुषे नलोपार्थमवश्यं मध्यमपदत्वानाक्रान्तेति वक्तव्यं मध्यमपदत्वानाक्रान्तविशेषणेनेव माषकुम्भवापेनेत्यादावपि कुम्भेत्यस्य मध्यमपदत्वात्प्रत्ययलक्षणसिद्धौ पदव्यवायेनेति णत्वनिषेधे सिद्धे कार्यित्वनिवेशो न कार्य इति चेन्मैवम् । गोचेत्यादावल्लोपस्य स्थानित्वमादाय अवङ्प्राप्तौ न पदान्तेति सूत्रे भाष्ये वेतस्वानित्यादौ स्थानिवत्त्वनिषेधाभावसूचकत्वाभावाय पदे ऽन्त इति सप्तमी समासे प्रत्यासत्त्या परपदस्था-

जादेशो न स्थानिवदित्यर्थान्न जायते गोचेत्यत्र पदत्वं सुबन्तेन समासे प्रत्ययलक्षणेनैव पदत्वात् तच्च दुर्लभमुत्तरपदत्वे च तिनिषेधात् कार्यित्वनिवेशे तु प्रकृते कार्यित्वाभावादुत्तरपदेति वार्तिकाप्रवृत्तौ प्रत्ययलक्षणेनैव पदत्वात् परपदस्थाजादेशत्वात् स्थानिवत्त्वनिषेधान्नावङ् अत्रोच्यते गतिकारकोपपदेति परिभाषया सुबुत्पत्तेः प्राक् समासे परपदस्थेत्यत्र पदशब्दः पदत्वयोग्यपर इति भवदुक्तेः प्रकृते दोषाभावात् अतद्धितइति वक्तव्यं पदव्यवाये ऽपीति सूत्रस्थवार्तिकम् आर्द्रगोमयनेत्याद्युदाहरणमेतद्वार्तिकप्रत्याख्यानाय भाष्ये पदव्यवायइति सप्तमीसमासे निमित्तिनोर्मध्ये यत्पदं व्यवधायकं तस्य परपदत्वम् । यत्रास्ति तत्र णत्वनिषेध इत्यर्थे आर्द्रगोमयेणेत्यादौ व्यवधायकस्य गोः परपदत्वाभावाण्णत्वनिषेधोन एवं च माषकुम्भवापेनेत्यादावपि वापेत्यस्य पदत्वं वक्तव्यं प्रत्ययलक्षणेनैव तच्च दुर्लभं कार्यित्वनिवेशाभावे मध्यमपदानाक्रान्तोत्तरपदत्वाभावादुत्तरपदत्वे चेति प्रत्ययलक्षणनिषेधात् तन्निवेशे तु कार्यित्वाभावात्प्रत्ययलक्षणवृत्त्योत्तरपदपत्वात्पत्वनिषेधः तथा च कार्यित्वनिवेशः सफल इति चेन्मैवम् । सिद्धान्ते ऽपि माषकुम्भं वपतीति उपपदसमासे सुबुत्पत्तेः प्राक् स्वीकृते च तत्र णत्वनिषेधाय पदे व्यवाय इत्यत्र पदशब्दः पदत्वयोग्यपर इत्यर्थो भट्टैरवश्यमङ्गीकर्तव्यः । नच गतिकारकोपपदेत्यस्यानित्यत्वात्सुबुत्पत्त्यनन्तरं समासे कार्यित्वनिवेशे प्रत्ययलक्षणेन पदत्वपरत्वात् प्रकृते निषेधे पदशब्दस्य पदत्वयोग्यपरत्वे मानाभाव इति वाच्यम् । ध्वगक्रीतेति प्रतीकमुपादाय कर्तृकरणइत्यत्र बहुलग्रहणेन गतिकारकोपपदानामित्यस्यानित्यत्वात्सुबुत्पत्त्यनन्तरमेव समास इति भावः । इदमुपपदमिति सूत्रे कैयटे स्पष्टम् अयमजादिष्वित्यनेन गत्यादेरनित्यत्वे न मानमिति तदाशयः । अत

एव एतत्कर्तृकरणइति सूत्रे बहुलग्रहणफलत्वेनोक्तं भाष्ये अम्बाम्बेति सूत्रे गवादिग्रहणं तु निपातार्थं तेन हृदिस्थ इत्यादौ षत्वं नेति दिगित्युक्तम्। शेखरइति स्वीयग्रन्थपर्यालोचनया गति कारकेत्यस्यानित्यत्वाभावे माषकुम्भवापेनेत्यादौ उपपदसमासे णत्वनिषेधार्थं पदव्यवाये इत्यत्र पदशब्द पदत्वयोग्यपर इति भट्टैरप्यवश्यमङ्गीकरणीयव्याख्यानेन माषकुम्भवापेनेत्यादौ पूर्वं समासे णत्वनिषेधसिद्धौ सप्तमीसमासेपदव्यवायेनेति सूत्र ...र्थ्येन च कार्यित्वनिवेशाभावेऽपि प्रत्ययलक्षणस्वीकारे कार्यित्वनिवेशो निष्फल एव। किञ्च पर्य्याणद्धमित्यत्र गतिकारकेत्यस्यानित्यत्वपक्षे ऽपि सुबुत्पत्त्यनन्तरं कुगतीतिसमासे कार्यित्वनिवेशे सत्यपि प्रकृते नद्धमित्यस्य णत्वनिषेधरूपकार्यित्वात्प्रत्ययलक्षणनिषेधे पदपरत्वाभावान्निषेधाभावे णत्वापत्तेः अट्कुप्वाङिति सूत्रे आङ्ग्रहणवैयर्थ्यापत्तेश्चातः कार्यित्वानिवेशे ..पे पदव्यवायइत्यत्र पदशब्दः पदत्वयोग्यपरः विभक्तीतरानपेक्षया लोके ऽर्थबोधजनकपरो वा सर्वैरत्या स्वीकर्तव्य एव इति कार्यित्वनिवेशाभावे ऽपि माषकुम्भवापेनेत्यादौ सप्तमीसमासे ऽपि न दोषः किञ्च अजादेः पदस्येत्येतन्मात्रार्थं ङमुट्सूत्रे ऽनुवृत्त्यर्थम् । उञि च पदे इति सूत्रस्थपदग्रहणं कार्यं परमदण्डिनावित्यादौ मूलोक्तार्थेनापि प्रत्ययलक्षणनिषेधे ङमन्तपदाभावान्न ङमुडित्यपरमपि लाघवमिति विभावयन्तु सुधियः। अतोम् । इत्यत्रम् इति च्छेदे प्रथमैकवचने उकारस्येत्संज्ञालोपयोः सकारस्य मकारे कृते ज्ञानमिति सिद्धम् । द्वितीयैकवचने आदेः परस्येत्यकारस्य मकारे कृते मकारद्वयश्रवणंस्यादिति। न च संयोगान्तलोपेन निर्वाहः झलो झलीत्यतो झल्ग्रहणानुवृत्त्या संयोगान्तस्य झलो लोपान्मकारस्याझल्त्वात् झलग्रहणाननुवृत्तिपक्षे वाक्यभेदे संयोगान्तस्य लोपः संयोगान्तस्य झलो

लोप इति पूर्ववाक्यं क्व चिद्गणतिरिक्तेऽझल्यपि प्रवर्तते यथा गिरिवेडिति अत्र गिरौ वेश्मयस्य स गिरिवेश्मयतीति गिरिवेडिति अज्झलो लोपे प्रमाणम् । अमो मश् । इत्यत्र मद्वयं विधाय मकारस्य संयोगान्तलोपे वर्धीं वृत्रमिति रूपासिद्धौ शित्वप्रत्याख्यानपरं भाष्यमेव वर्धीं वृत्रामित्यत्र संयोगान्तलोपस्यासिद्धत्वादस्ति सिच इत्यपृक्ताश्रयस्येह लोपानापत्त्या एकदेश्युक्तं तद्भाष्यम् अदड्डतरादिभ्य इति सूत्रे भाष्ये ऽद्‌डो डित्वाभावे प्रथमयोरिति पूर्वसवर्णदीर्घमाशङ्क्यानुनासिकोपधत्वादित्युक्त्या दीर्घवारणे द्वितीयैकवचने आदेः परस्येत्यकारस्य दकारे मकारश्रवणेनापादानपरं भाष्यं प्रकृते गमकं हे ज्ञान इत्यादौ म निमित्तप्रकृतिप्रत्ययसन्निपातविनाशे एङ्ह्रस्वादिति लोपः सन्निपातपरिभाषया न स्यादिति मिति च्छेदे समाधानमुक्तं शेखरकृता तदपि विरुद्धम् । एङ्ह्रस्वादिति सूत्रस्य शेखरेण तत्वे हि हेलक्ष्मि इत्यादौ सन्निपातपरिभाषया संबुद्धिलोपो न स्यादित्याशङ्क्य गुणात्संबुद्धेरिति वक्तव्ये एङ्ह्रस्वग्रहणाज्ज्ञापकात्संबुद्धिलोपे कर्तव्ये सा परिभाषा न प्रवर्तते । न च विशेषापेक्षं ज्ञापकं संबुद्धिमुपजीव्य यत्र ह्रस्वस्तद्विषये न प्रवर्तते इति अप्रतिबाधके प्रमाणानां सामान्ये पक्षपातादिति न्यायात्सामान्यापेक्षं संबुद्धिमात्रलोपे न प्रवर्ततइति । न च एङ्ह्रस्वादिति सूत्रस्थं हे ज्ञान इत्यादौ लोपोपपत्तये हल्पदानुवृत्तिव्यधिकरणान्वयाङ्गीकारपरं भाष्यं बाधकमस्तीति मैवम् । लाघवात्सामान्यपेक्षमेव ज्ञापकम् । सिद्धान्तिनोक्तम् व्यधिकरणान्वयहल्पदानुवृत्तिपरं भाष्यमेकदेशयुक्तिर्गौरवात् तस्मात् मकारच्छेदे ऽङ्गाक्षेपो व्यधिकरणान्वयहल्पदानुवृत्तये न कर्तव्यो न क्वापि दोषलेशश्च समाधानमूह्यम् ॥

इति श्रीमद्धोरिलसंदर्भितपुण्यग्रामसभामद्प्रौढपण्डितविप्रतिपत्तिजन्यपूर्वपक्षसङ्ग्रहः ॥　　　इति श्रीपूर्वपक्षावली समाप्ता ॥

# सूचीपत्रम् ।

| | | रु.आ पा. |
|---|---|---|
| १ | मीमांसान्यायप्रकाशः ( आपोदेवकृतः ) .. | ०-१०-० |
| २ | चरणव्यूहः- सभाष्यः शौनकीय परिशिष्टः स० | ०-६-० |
| ३ | शब्दकौस्तुभः-नवाह्निकमात्रम् ... ... | ४-०-० |
| ४ | व्याकरणमहाभाष्यम् कैयट टीकोपेतम् ... | १०-०-० |
| ५ | तस्यैव—नवान्हिक कैयट विवरण सहित ... | १-८-० |
| ६ | काशिकावृत्ति—ससूत्र ... ... ... | ५-०-० |
| ७ | पातञ्जलयोगदर्शन-स्वामी बालरामजीकृत टिप्पणी स० | ३-०-० |
| ८ | वैयाकरणभूषणसार—दर्पणटीकोपेता ... | २-०-० |
| ९ | माधुरीपञ्चश्रेणी ... ... ... ... | ०-२-० |
| १० | मीमांसादर्शनम्—शावरभाष्य सहितम् ... | ८-०-० |
| ११ | सांख्यदर्शनम् सांख्यप्रवचनभाष्यसहितम् ... | १-८-० |
| १२ | दानमयूख ( धर्मशास्त्र ) ... ... ... | १-८-० |
| १३ | कालमाधव ( धर्मशास्त्र ) ... ... ... | १-०-० |
| १४ | जागदीशी- सङ्गत्यनुमितिप्रकरणस्य ... ... | ०-१२-० |
| १५ | सिंहव्याघ्रलक्षणसहितपञ्चलक्षण्याः .. ... | ०-४-० |
| १६ | व्यधिकरणस्य ... ... ... | ०-१२-० |
| १७ | सिद्धान्तलक्षणस्य ... ... ... ... | ०-८-० |
| १८ | अवच्छेदकत्वनिरुक्तिसामान्याभावविशेषव्याप्तिग्रन्थस्य | ०-८-० |
| १९ | सामान्यलक्षणस्य ... .. ... ... | ०-१२-० |
| २० | पक्षतायाः .. ... ... ... ... | ०-१२-० |
| २१ | सामान्यनिरुक्तेः ... ... ... ... | ०-८-० |
| २२ | न्यायसिद्धान्तमञ्जरी । तर्कप्रकाशटीकासहिता । | १-०-० |
| २३ | शब्दशक्तिप्रकाशिका । श्रीकृष्णकान्तीयटीकासहिता | ३-४-० |
| २४ | बीजगणितम् ।म०म०प०सुधाकरद्विवेदि-कृतटिप्पणीस० | १-४-० |
| २५ | बीजगणितम् । म० म० पं० बापूदेवशास्त्रीकृतम् पूर्वार्धम् | २-०-० |
| २६ | बीजगणितम् । म० म० पं० बापूदेवशास्त्रीकृत उत्तरार्ध | १-०-० |
| २७ | सिद्धान्तशिरोमणिः । म० म० पं० बापूदेव शास्त्री | ६-०-० |
| २८ | शास्त्रसिद्धान्तलेश पञ्चात्मक | २-०-० |

☞ पत्रादिप्रेषणस्थानम्—हरिदासगुप्तः—कार्याध्यक्षः
चौखम्बा संस्कृत सीरीजकार्यालय-बनारससिटि।

॥ श्रीः ॥

( व्याकरण )

# उत्तरपक्षावली ।



PUBLISHED BY H. D. GUPTA & SONS. PROPRIETORS,
THE CHOWKHAMBA SANSKRIT BOOK DEPOT.

BENARES CITY.

*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press,*
BENARES.

---

1911

( उत्तरावल्याः )

# सूचीपत्रम् ।

---

( इत्युत्तरपक्षावलि सूचीपत्रम् । )

# श्रीगणेशाय नमः ।

उत्तरपक्षावली प्रारभ्यते ।

विद्याविनोदचतुरं विद्यादं विघ्ननाशनम् ।
तथाविधं मन्नुदेवं गुरुं वाग्देवतां भजे ॥ १ ॥
प्रश्नावल्यां होरिलस्य ये प्रश्नाः पण्डितैः कृताः ।
तेषां सदुत्तरार्थाय क्रियां ह्युत्तरावली ॥ २ ॥

तत्र तावत् धातोस्तन्निमित्तस्यैति किम् ओयते औयतेति मूलोक्तदोषनाशाय न यकीति न्यासः । तत्समाधानम् आचारक्विवन्तप्रकृतिककर्तृक्विवन्तगोग्लौशब्दादिभ्यः तत्र साधुरिति यति गोयं ग्लौयमित्यादि तथा विजन्तभूधातोर्भो इत्यस्माद्यति भोयमित्यादौ च धातोरेव यादिप्रत्ययभिन्नमित्यस्य वान्तादेशो माभूदिति न यकीति न्यासो दुष्टः ॥ इको गुणवृद्धी । वदव्रजेरिति । ओतश्श्यनीति । आदेच उपदेशसूत्रस्थभाष्यप्रामाण्यादेजन्तेभ्य आचारक्विपोऽभावे तु भोयमित्यादाववश्यं दोषात् स दुष्ट एव । अतः अन्यत्समाधानं विभावयन्तु सुधिय इत्युक्तम् । तत्र समाधानान्तरमुक्तं भाष्याविरुद्धं तु धातोरित्यवयवषष्ठ्यैव उश्शम्भूस्तामिच्छति ऊयति आ ऊयति ओयति लङि औयदित्यादौ यथान्यासे न वान्तादेशः क्यजन्तधातोरवयवस्यैवैचो यादिप्रत्ययानिमित्तत्वाभावान्न यकीति न्यासे तु स्याद्दोषः । गव्यतिनाव्यति इत्यादौ तु व्यधिकरणषष्ठ्या चिन्त्यो वान्तादेशः यदि तन्निमित्तस्येत्यनेन यादिप्रत्ययभिन्ननिमित्त-

स्यैवैचो वान्तादेशत्वाद्व्याप्तिरिष्येत तदा स्वाभाविकस्यैवैचो वान्तादेशे सिध्यति गव्यतीत्यादि सामान्यस्य व्याप्तौ तु न सिध्येदिति तत्त्वप्रकाशिकायां स्पष्टम् । अकित्तद्धितयोः इति न्यासे यातौ तद्धिते च वान्तादेशनिषेधे तु बाभ्रव्यं गव्यतीत्यादि न सिध्येत् न यतीति न्यासे श्रूयते इति न क्ङितीति न्यासे गव्यमित्यादि च न सिध्येत् । वान्तो यि प्रत्यये दृश्यते इति च कृते यद्वा नि मन्यते स्वरूपकुल्यमिति कृते यान्तवान्तादेशा बाहुल्यका इति सिद्धे बहूनां वान्तविधीनां वैयर्थ्यं तथापि लक्ष्यानुरोधमपेक्ष्य इति सुहृद्भूत्वाचार्यस्तथा न कृतवान् अत एव पाणिनीयानां च नित्यसम्बन्धप्रकार इत्यपात लक्षणस्य अस्मदानुरोधेन कृतत्वात् एतल्लक्ष्यैकचक्षुष्काणां तं विना लक्षणं लक्ष्यदर्शनमाशङ्क्य नानुगमा कर्तव्या यत्रानुगम इति भाष्यादननुगम एव लक्ष्यदर्शनं शरणं सति प्रामाण्य इति बोध्यम् । यत्तूक्तं वान्तो यीत्यस्य तत्सूत्रस्य भाष्याद्धातुविषयकत्वाद्धातोरित्याकृष्यत इति तद्धातुरित्येतत्सूत्रस्थभाष्यविरुद्धं निर्मूलं च तथा हि तत्रत्यसूत्रे भाष्ये एवकारः किमर्थः नियमार्थः नैतदस्ति प्रयोजनं सिद्धे सत्यारभ्यमाण उत्तरेणैवकारं नियमार्थं भविष्यति अतोऽवधारणार्थः तर्हि शङ्क्यमित्यादौ यदि स्यादित्युक्तेः । यत्तु असिद्धं बहिरङ्गपरिभाषाया ऊठ्ग्रहणं ज्ञापकम् इति भाष्ये दूषणं दत्तम् ऊठ्ग्रहणं कथं ज्ञापकं प्रौहेत्यादौ विभक्त्युपात्तार्थं तदकरणे ऊठिदं पदाद्यप्पुम्रैद्युभ्यः परोऽसर्वनामस्थानविभक्तिरुदात्ता स्यादिति न प्रवर्तते इत्युक्तं तदिष्टापत्तेरयुक्तं वाहःस्थाने य ऊठ् तस्य तेन ग्रहणमिति तद्भाष्यतो लाभात् कथमन्यथा व्यूह इत्यादेरनभिधानमिति विभावय ज्वरत्वरेत्यादिविहिते ऊठि जूः जूरौ जूरः तूरित्यात्तदावेव

तत्प्रवृत्तेः तदुक्तं परिभाषेन्दुशेखरे प्रौढ इत्याद्यन्ताध्वेव वृद्धेः प्राप्तेः अन्ये तु परिभाषाशयं विना न विधानं वर्णयन्ति ऊठिदमित्यत्र ववेदमेवास्तु कोऽर्थः अस्य दीर्घ ऊकारो यत्र वा शब्दस्य ह्रस्व उकारो यत्र ततः परा ऽसर्वनामस्था नविभक्तिरुदात्ता स्यादिति आद्यस्य ऊरुः ऊरुणेत्यादि द्वितीयस्य विश्वौह इत्याद्युदाहरणं ऊश्च वाश्च वौ द्वन्द्वे कृते लोपो व्योरिति वलोपः उश्च ऊश्चेति दीर्घह्रस्वयो द्वन्द्वे कृते षष्ठीतत्पुरुषः ववास्थाने यौ दीर्घह्रस्वौ उकारौ ताभ्यां पराऽसर्वनामस्थानविभक्तिरुदात्तेति तदर्थः । वौ ऊठिदमित्यत्रावादेशः ऊठमपि तथाधाने संदिग्धं क्विटं लोपो व्योरिति सूत्रस्थवकारप्रत्याख्यानपरभाष्यविरुद्धं चेत्यरुचेरुक्तं दीर्घोच्चारणकृतोऽर्थः परिभाषायां ज्ञापकं सम्प्रसारणे निमित्ते कृते छ्वोः शूडित्यूठि कृते विश्वौह इत्यादिसिद्धेरिति तदपि चिन्त्यम् । दीर्घोच्चारणं [illegible] कृतस्येति विशेषणार्थत्वं शेखरे स्फुटं जनितत्वात् इति [illegible]क्तत्वात् । ज्वरत्वरेत्यत्रापि ह्रस्वकरणे [illegible]सिद्धेः । एतेनोठिदमित्यत्रापि ह्रस्व एव पठ्यतां [illegible]म् । किं च चतुरनडुहो नद्यजादीन्य[illegible] इति [illegible] नद्यजादौ उदात्ते स्त इत्येव सिद्धे [illegible] वाहनद्या उदात्तविधानाद्वाह इति [illegible] इति भाष्याशयः । तस्यापि [illegible]समास इत्यस्याग्रे पाठेन ज्ञापक[illegible]भाषापरत्वादि[illegible] न । वाह इ[illegible] ऊठिमित्यत्रोठोऽकरणं ऊर इत्यादौ [illegible] । [illegible] कृते वाह इत्यस्यापि करणं वाह इति ऊठि[illegible]सिद्धेः इति [illegible] यथायाति तथापि अनभिधानमेव कारणं [illegible] कथमन्यथा

वाहो ङीप् ज्ञापकादूङेति तर्क्यतां तस्यापि यूस्त्र्याख्याविति न-
दीत्वात् कथं वा श्रीमद्भिः प्रवाहैरित्यादौ परादिवद्भावेन वाह
इत्यनेन प्राप्तः स्वरो बोधात् किं च तस्य वाह्यप्रयन्ते इत्यस्य
वाह इत्यादौ त्वदुक्तव्यवस्थितविभाषाश्रयणं च प्रमाणं किं
चोठः स्वरस्य विश्वौह इत्यादौ इष्टत्वज्ञापकपरिभाषाविरोध
एवेति तत्स्वराभिधानस्य भाष्यकारानाभिप्रेतत्वमेव लभ्यतइति
दिक ॥ यत्तु विभक्तिश्चेति व्यर्थं प्रदेशे क चिद्यथायथं सुप्ति-
ङ्ग्रहणेन चेष्टासिद्धेः । अष्टन इत्यत्र सुपीत्येवास्तु त्यदादीनाम
इत्यत्र सुपीत्यनुवृत्तौ यत्र तत्रेत्यादावन्वं तु प्राग्दिशीयानां सुप्संज्ञ-
यैव सिद्धे सुपि चेत्यत्र सुपि यभि इति न्यासेनतर्हीत्यादौ अदोपः
सुपो धातुप्रातिकयोरिति सुपो लुक् सुप्पिताविस्यनुदात्तता च न
त्रलतसिलादीनां विधानसामर्थ्यात् त्रलादौ लित्करणाच्चेति वि-
भावयन्तु सुधिय इत्युक्ततत्र विभक्तिसंज्ञा च लादौ प्रयोजनमि-
दमस्ति इदम इशादेशे उडिदमिति इदं स्वरेण तस उदात्तत्वमि-
ति प्राग्दिशीय इत्यत्र भाष्ये स्पष्टं ततस्तृतीयद्वित्वमेतद्भाष्यगौर-
वादिति च कैय्यटे तत्र किं यदुक्तं त्रलादीनां सुप्सज्ञायां सुपो धा-
त्विति लुङ् तेन विधानसामर्थ्यादिति तन्न । तद्धिते सति प्रा-
तिपदिकसंज्ञा तस्यां च तद्धितलोप इति सन्निपातविघातादेवालु-
क्सामर्थ्येन अलुक्कर्तुमशक्यम् अव्ययसंज्ञायां तद्धितान्तात्सु-
पो लुक् एवं प्रयोजनसत्त्वात् तस्मादित्याद्यर्थे तदित्यादे प्रयोग-
फलस्य सत्त्वात् प्राग्दिशइत्यत्र कैय्यटे उक्तम् । ननु मध्ये
ऽपवाद इति न्यायादनुदात्तौ सुप्पितावित्येवं स्वरं विभक्तिस्वरो
बाधते न तु लित्स्वरं लित्स्वर एव तु परत्वाद्विभक्तिस्वरं बा-
धते नैष दोपः। ऊडिदमित्येतत्सूत्रं लितीत्यत्रानुवर्तते लित्स्वरं-
बाधित्वा विभक्तिस्वरो भवति तृतीयादिग्रहणेन तृतीयामारभ्य

प्राग्यिशः प्रत्ययो गृह्यत इति किं च दानीमो मस्येत्संज्ञानिषेधाय विभक्तिसंज्ञेति स्पष्टं तत्र भाष्ये अन्यथा मिदच इत्यन्तादचः परं स्यादिति तत्र कैय्यटे स्पष्टं दानीमो ऽदन्तस्वीकारे दोषाभावे ऽप्युक्तस्थले तम उदात्तत्वफलं विभक्तिसंज्ञायाः प्रयोजनम् इति भाष्ये स्थितं प्राग्दिशीयानां सुप्संज्ञायां सुप्तिङ्तुस्मा इति दानीमो मस्येत्वं न ऊडिदमित्यत्रापि सुबेव संबध्यते सावेकाच इत्यत्रापि विभक्तिस्थाने सुपकरणादित्यदोष इति चेत्तर्हि अष्टाविवाचरति त्वाचारक्विबन्तादष्टनशब्दाल्लटास्तिपि शपं बाधित्वा परत्वात्प्रतिपदोक्तत्वाद्विभक्तिग्रहणसामर्थ्याच्च नस्यात्वे ऽष्टातीति कृते तन्न स्यात् तस्मादष्टन इति विभक्तिग्रहणं कार्यं तसादीनां विभक्तिसंज्ञष्टव्येति केचित्। अथ वा ऽष्टन आ सुप्तिङीत्येवास्तु तसादीनां सुपसंज्ञेवास्तु विभक्तिश्चेति न कार्यमित्यन्ये यदि विभक्तिश्चेत्यस्य प्रत्याख्यानेऽत्र एवाग्रहणं तर्हि अतिलाघवात्प्राग्दिशीयानां। माभूतां विभक्तिसुप्संज्ञे किं तु त्यदाद्यत्वफलाय त्यदादीनामप्राग्दिशीयतसादौ वेति पठ्यतां प्राग्दिशीयइति न कर्तव्यं सुपि यभीति च तथाष्टन इत्यत्र सुप्तिङ्वास्तु दानीमो मस्य यथा नात्वं तथो क्तमेव इतइत्यन्तोदात्तस्तु तत्वप्रकाशिकायां स्पष्टं ३ घुणघूर्णभ्रमणे अत्रोपधायां चेति दीर्घे सिद्धे दीर्घोच्चारणं प्रक्रियालाघवार्थमिति शेखरग्रन्थः। स चायुक्तः मूर्च्छादिषु दीर्घाकरणे ऽत्र लेखकप्रमादेन दीर्घकरणात् ऊर्जेरपि दीर्घोच्चारणं तथैवोपधायां चेति सूत्रकरणएव लाघवादूर्णोतेर्नुलोपश्च महति ह्रस्वेति वचनादृकारस्यैव दीर्घ इत्यलम्। पात्पदान्तात् पदान्तात्पकारात्परस्य नस्य णत्वं नेत्यर्थः। निष्पानं दुष्पानम्। अत्र कृत्यच इति वा भावकरणयोरिति वा णत्वं प्राप्तम्। अत्र

मनोरमायां पदान्तात्किं पुष्णातीति प्रत्युदाहृतं तदयुक्तं । ष्टुत्वेन सिद्धे रिति शङ्का तत्समाधानं तु रषाभ्यामिति सूत्रे भाष्ये वकारग्रहणमुत्तरार्थं पात्परस्य नस्य ष्टुत्वेन निर्वाहात् एवञ्च षात्पदान्तादित्यनेनापि ष्टुत्वस्यैव निषेधः पदान्तग्रहणाभावे पुष्णातीत्यत्र ष्टुत्वनिषेधे रूपासिद्धिः स्पष्टैवेति पण्डिताः । वस्तुतस्तु षग्रहणमुत्तरार्थमिति रषाभ्यामित्यत्र भाष्ये ऽदर्शनाद्वाच्यसामान्यचिन्तया पदान्तात्पात्परस्य नस्य णत्वमात्र निषिध्यत इत्यर्थः । न च षण्णामित्यत्रापि निषेधस्स्यादिति वाच्यम् । पदे ऽन्तः पदान्त इत्येव भाष्ये सुसर्पिष्केणेत्यादौ णत्वसिद्धये व्याख्यानात् पदस्थनकारस्यैव णत्वनिषेधात् एवञ्च पदान्तग्रहणाभावे सुसर्पिष्केणेति प्रत्युदाहर्तुमुचितमिति भाष्यदर्शिनः । न हि सुसर्पिष्केणेत्यत्र ष्टुत्वं लभ्यमिति दिक् ५ । ददातिदधात्योर्विभाषा । अनुपसर्गादेतयोर्विभाषा शः । श्याद्व्यधेति णस्यापवादः शपक्षे तु जुहोत्यादित्वाच्छपः श्लुः श्लाविति द्वित्वं ददः दधः पक्षे णः दायः धायः इति अनुपसर्गादित्येव प्रदः प्रधः इति मूलं तत्र पण्डिताः इदं सूत्रं मास्तु । दद दाने दध धारणे आभ्यां पचाद्यच् ददः दधः इति श्याद्व्यधेति णे युकि दायः धाय इति च सिद्धेरित्याशङ्क्य समाहितम् अचि कृते न ददः अददः अत्र नञ्तत्पुरुषे तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्या इत्यनेनाव्ययपूर्वपदप्रकृतिस्वर इष्यते तस्माधित्वा अचकाविशक्तौ अजन्तं कान्तं चान्तोदात्तं स्यादशक्ताविच्यन्तोदात्तस्स्यादिति सूत्रम् इति । वस्तुतस्तु ससमासात्प्रागेवान्तरङ्गत्वादचकावशक्तावित्यन्तोदात्ते निवृत्ते सति शिष्टत्वेनाव्ययपूर्वपदप्रकृतिस्वरः सिद्ध एव किं तु अभ्यस्तानामादिरित्याद्युदात्तार्थं प्रदधः प्रदधः इति व्यावृत्त्यर्थं

दाञ्धाञोरपि ददद्धयोः सिद्ध्यर्थं च वचनं तदपि रूपद्वयमिवि- भाषाग्रहणं विनैवानुबन्धवैरूप्याद्वा सरूपसूत्रेण णशप्रत्ययाभ्यां सिद्धं विभाषाग्रयणं नानुबन्धकृतमसारूप्यमिति ज्ञापनार्थमि- ति वासरूपसूत्रे भाष्ये स्पष्टम् । चितः अन्त इत्यनुवर्त्तते चि- तोऽन्त इत्यर्थः । अत्र वार्त्तिकम् चितः सप्रकृतेर्बह्वकजर्थमिति शेखरे अस्यार्थः चित्प्रत्ययप्रकृतेरन्त उदात्त इति तदर्थो न तु प्रत्ययमात्रस्यान्त इति अत्र चाकचश्चित्त्वं ज्ञापकमन्यथाकच एकाचकत्वेन प्रत्ययस्वरेणैवोदात्तत्वे सिद्धे तदर्थं व्यर्थं सदत्र ज्ञापकमिति तास्यनुदात्तेण्डिद्दुपदेशाल्लसार्वधातुकमन्हिङोरि- त्यत्र शेखरे तु अस्मात्परं लसार्वधातुकमनुदात्तं न्हुङ्अर्धीङौ वर्ज्जयित्वेत्यर्थः रुणद्धीत्यत्र श्नमो मित्त्वेन परश्चेत्यस्य बाधे त- त्सन्नियोगशिष्टप्रत्ययाद्युदात्तं बाधनमित्युक्तम् । अयं ग्रन्थः पर- स्परविरुद्धः । यथा मित्त्वेन परश्चेत्यस्य बाधे तत्सन्नियोगशि- ष्टप्रत्ययाद्युदात्तत्वस्यापि बाधः एवमकच्यपि प्राक्टेग्रहणेन प- रश्चेत्यस्त बाधे तत्सन्नियोगशिष्टप्रत्ययाद्युदात्तस्याप्राप्त्याऽक- चश्चित्त्वस्य ज्ञापकतावर्णनमयुक्तमिति विरोधः । अत्र नवीनै- रित्थं परिह्रीयते उभयशब्दस्य सर्वादौ पाठो व्यर्थ इति प्रघट्टके भाष्यग्रन्थेऽकश्चेदानीं काकचोः स्वरे रूपे वा विशेषोऽस्ती- त्युक्त्वाऽकचि सन्नियोगशिष्टप्रत्ययस्याश्रयणे प्रमाणाभाव इत्य- न्यदपि विभातयन्तु सुधिय इति । यत्त्वत्रोक्तं । चितः स्थाने चित्प्रत्ययप्रकृतेरन्तोदात्त इति वार्त्तिकार्थस्तन्न । शोभनम् । अ- चूप्रभृतिप्रत्ययस्य कुण्डिनजादिप्रत्ययस्य चेह ग्रहणमिति कैय- टविरोधात् बह्वकजर्थमिति प्रतीकमुपादाय बह्वकचोऽन्तोदात्त- त्वे कार्य्ये चितः सप्रकृतेरिति वचनमिति कैयटविरोधाच्च बह्वक- च्प्रत्ययवती या प्रकृतिस्तस्या अन्त उदात्त इत्येवार्थो वार्त्तिक-

स्य एतद्वार्तिकप्रत्याख्यानपरभाष्यप्रामाण्याच्चायमर्थः । तथा हि तत्तर्हि वक्तव्यं पूर्वसूत्रानिर्देशत्वात् चितइति भाष्यं चित्वात्समुदायो ऽन्तोदात्त इत्यर्थः । कुण्डिनजादयो ऽपि व्यपदेशिवद्भावाच्चिदन्ता उच्यन्तइति कैयटः चित इत्यनेन चित्वतो ऽग्रहणेऽकच एकाच्कत्वेन प्रत्ययस्वरेणैवान्तोदात्तत्वं सिद्धम् । तस्य चित्करणाच्चित्वत इत्यर्थो लभ्यते सप्रकृतेरिति बह्वकजर्थमुपादीयते तेन कुण्डिनप्रकृतिष्वदोष इत्युक्तम् । चित इत्यनेन चित्वतो ग्रहणे पुत्रकाम्यादिषु चित्प्रत्ययान्तेषूपयोगाभावेन बह्वकजर्थमित्युक्तम् । तथैवोदाहृतं च भाष्ये बह्वच् बहुभुक्तमित्यादि अकच् सर्वकैरुच्चकैरित्यादि च यतः शेखरयोर्विरोधो द्भावनं तत्र श्नमो मित्वेन परस्येत्यस्य बाधे ऽपि प्रत्यय इत्यस्य प्रकृतिरिष्यतएव प्रत्ययत्वं विना लशक्विति शस्येत्संज्ञानापत्तेः । प्रत्ययत्वे चाद्युदात्तः सन्नियोगशिष्टः केन वार्य्येत अकचि तु प्राक् टेर्ग्रहणात्परश्चेत्यस्य बाधे ऽकचः प्रकृतिप्रत्ययविशिष्टस्य प्रत्ययत्वे प्रामाण्यफलयोरभावाच्चित इत्यनेन चित्वतोः प्रकृतिप्रत्ययोरविशेषेण ग्रहणात्सन्नियोगशिष्टन्यायसंचारः काकदन्तपरीक्षावदाभातीति चित इति सूत्रे भाष्ये स्पष्टम् ७ आर्द्धधातुकस्येड्वलादेः ॥ अङ्गसंज्ञानिमित्तस्य वलादेरार्द्धधातुकस्येडितिसूत्रार्थः । अत्र शेखरे आर्द्धधातुकस्येति किम् जुगुप्सते इति अत्र सूत्रे भाष्ये ऋत इद्धातोरिति पदमुच्चार्य्य विहितस्य वलादेरिति व्याख्ययात्र दोषाभावादार्द्धधातुकग्रहणं प्रत्याख्यातम् । रुदादिभ्यः सार्वधातुकइति नियमादास्ते शेते इत्यादावदोष इति स्थितम् स्यसिचसीयुडित्यत्र भाष्ये तु अङ्गस्येट् माभूदित्यार्द्ध धातुके इत्यनुवर्त्त्य योगविभागमाश्रित्य यावानिट् स सर्वो ऽप्यार्द्ध धातुकस्येडित्युक्तम् । तत्परस्परविरुद्धं शेखरग्रन्थो ऽपि

भाष्यविरुद्धः। अत्रेत्थं विरोधोद्धारं कुर्वन्ति पण्डिताः विधिसूत्रे प्रयोजनं नास्तीति प्रत्याख्यानं योगविभागार्थतया प्रयोजनोक्तिः जुगुप्सत इति शेखरग्रन्थस्तु आर्द्धधातुकग्रहणमनुवर्त्योक्त इति। अत्रेदं तत्त्वम्। स्यासिचूसीयुडिति सूत्रस्थं भाष्यं तावदेकदेशिसूत्रकाररीत्या प्रवृत्तम् एवं सप्तमे योगविभागः करिष्यते- आर्द्ध धातुकस्येट् यावानिट् नाम स सर्व आर्द्धधातुकस्यभवतीति विज्ञेयं ततो वलादेरिति वलादेरार्द्धधातुकस्येट् भवतीति भाष्यम्। आर्द्धधातुकस्य इत्यस्य प्रत्याख्याने योगविभागस्यैकदेश्युक्तत्वं स्फुटमेव शेखरोऽपियुक्तएव तथाहि आर्द्ध धातुकस्येति सूत्रे भाष्ये किमार्द्धधातुकस्येति पदाभावे वलादेरङ्गस्याप्रत्ययस्येडिति विप्रतिपत्तिं कृत्वा यद्येतत्पदाभावे ऽङ्गस्येडापद्यते तत्पदसत्त्वेऽपि आर्द्धधातुकस्य यदङ्गं तस्येडित्यापादयितुं शक्यत्वात्तत्राक्रियमाणएवेष्टं विज्ञास्याम इत्युक्तम्। अनेन लक्ष्यशरणं सूत्रकारस्यापीति दर्शितम्। इदन्तर्हि प्रयोजनम् इह माभूत् आस्ते शेते एतदपि नास्ति प्रयोजनं रुदादिभ्यः सार्वधातुके इत्येतन्नियमार्थं भविष्यति रुदादिभ्य एव सार्वधातुके इड् भवति नान्येभ्य इति अत्र कैयटः सार्वधातुकएवेति नियमस्तु रुदविदेति क्त्वासनोः कित्त्वविधानान्न भविष्यति अनिट् सनो रुदादेर्हलन्ताच्चेति कित्त्वस्य सिद्धत्वात् क्त्वो ऽनिट् औपदेशिककित्त्वसद्भावादिति एवमपि वृक्षता अत्र प्राप्नोति धातोरिति वर्तते एवमपि लूभ्यां पूभ्यामत्र प्राप्नोति एवन्तर्हि विहितविशेषणं धातुग्रहणं धातोर्यो विहितः। ननु च धातोः एवायं विहितः। न चायं धातोरित्येवं विहितः क्व पुनर्धातुग्रहणं प्रकृतम् ऋत इद्धातोरिति तद्वै षष्ठीनिर्दिष्टं पञ्चमीनिर्दिष्टेन चेह विहितं शक्यते विशेषयितुम्। अथेदानीं षष्ठीनिर्दिष्टे-

नापि विहितं शक्यते विशेषयितुं शंक्यमार्द्धधातुकग्रहणमकर्तु- मिति प्रकृतसूत्रे भाष्ये स्थितम् लूभ्यामित्येतत्समानमेव जुगु- प्सतइत्यार्द्धधातुकग्रहणाभावे ऽप्यदोष एव । सनो ऽनार्द्धधातु- कत्वफलं गुणाभाव एव तेनेड्गुणौ नेति फलन्तु भाष्यमते फलितार्थकथनपरं जुगुप्सतइति प्रत्युदाहरणं च ८ व्यपदेशिव- द्भावो ऽप्रातिपदिकेनेति पूर्वादिनिस्सपूर्वाच्चेति योगविभागेन ज्ञापितेयमन्यथैकयोगं पूर्वात्सपूर्वादिनिरित्येव कुर्य्यात् न चात्र पृथग्योगे इष्टादिभ्य इत्यत्र स पूर्वादित्यस्यानुवृत्तिर्न स्यादेवं चानिष्टीति न सिध्येदिति वाच्यम् । ज्ञापकपरंयेनविधिरितिसू- त्रभाष्यप्रामाण्यादनिष्टीत्यस्यासाधुत्वात् एकयोगे ऽपि तावत् उत्तरत्रानुवृत्तौ बाधकाभावाच्च अत एव एवनान्तादसंख्यादे- रिति सार्थकमन्यथा ऽत्रापि व्यपदेशिवद्भावेन पञ्चम इत्यादाव- पि संख्यादित्वात्तद्वैयर्थ्यं स्पष्टमेवेति परिभाषेन्दुशेखरे स्पष्टम् । अत्रैष विचारो मन्दप्रयोजनः ९ ॥ पूर्वत्रासिद्धम् । सपादसप्ता- ध्यायीम् उत्तरत्रास्य पाठात्पूर्वत्र पदेन तस्याग्रहणात्त्रिपाद्या आसिद्धत्वं प्रति सूत्रे उत्तरत्रासम्बन्धात्फलितस्त्रिपाद्यां पूर्वं प्रति परमासिद्धमित्यर्थः । एवमर्थेश्चुत्वं धुटि सिद्धम् वाच्यमित्यादि- वार्तिकानि प्रमाणानि फलं गोधुङ्मानित्यादिसिद्धिः अन्यथा पूर्वं पूर्वशास्त्रप्रवृत्तौ घत्वजश्त्वानुनासिकेषु सत्सु भष्भावो न स्यादिति शब्दरत्नोक्तिः । सा विरुद्धेति पदान्ते भष्भावस्य न्याय्यत्वात् तत्समाधानं जश्त्वापवादत्वे ऽप्यनुनासिकत्वापत्ता- दत्वाभावात्तत्र कृते भष्भावो न स्यात् जश्त्वेकृते इत्यत्र जश्त्वा- प्राप्तावित्यर्थ इति पण्डितोक्तिरसम्बद्धा जश्त्वे कृते इति मूलाभावे जश्त्वप्राप्ताविति व्याख्याया दूरापास्तत्वात्। वस्तुतस्तु पौर्वापर्य्याश्रयणाविरोधेन पूर्वपूर्वप्रवृत्त्या चत्वभष्भावजश्त्वा-

नुनासिकानां प्रवृत्तौ नैवानिष्टं किञ्चित् किन्तु घत्वे कृते झय इति मतोर्मस्य तत्त्वापत्तिरेव शेखरोक्ता सुष्ठु इति चिन्त्यं सुधीभिः । अत्र यद्यपि लोके नाहार्य्यज्ञानस्यैव प्रवर्तकत्वम् इष्टं तथापि शास्त्रप्रामाण्यादाहार्य्यारोपोऽपि शास्त्रप्रवृत्तौ अप्रवृत्तौ च नियामक इतिबोद्धव्यमिति शेखरः । लोके नाहार्य्येत्यादिनियामक इत्यन्तमुक्तम् । तस्यायंभावः । यथा भूतले घटोऽस्तीत्यादौ भूतलाधिकरणकघटकर्तृकसत्वाऽत्यन्ताभावप्रतिबन्धिका एवमेतत्रिपादीस्थं शास्त्रं सिद्धमेव तत्रापि त्रिपादीस्थकर्तृकसम्भवज्ञानं प्रतिबन्धकम् एवं च पूर्वं शास्त्रं प्रति त्रिपादीस्थमसिद्धमित्यनुपपन्नमेव स्यादतो ऽदर्शनरूपे लोपे ऽभावारोपस्य रूपत्वेन मनोरथः इत्यादावदोषोऽभावाभावस्य प्रतियोगिस्वरूपत्वात् न चोत्वदृष्ट्या रोरित्यस्यासिद्धत्वमिति वाच्यम् ॥ दीर्घविधिसामर्थ्यादाश्रयासिद्धत्वात् अत्र समाधानं कर्मणो रोमन्थेत्यादिनिर्देशेन यत्र शास्त्रान्तरदृष्ट्याऽसिद्धत्वम् नास्ति तत्रैवाश्रयासिद्धत्वमत्र तु हशि चेत्यतत्प्रवृत्त्यापि रोरित्यस्योत्वमिति नाश्रयासिद्धत्वमन्यद्विभावयन्तु पण्डिताः ॥ वस्तुतस्तु यौगपद्येन शास्त्रद्वयप्रसङ्गे शास्त्रासिद्धत्वपक्षे रोरित्यस्याप्रकृत्य ढ्लोपाभावेन लोपशास्त्रस्यैवाप्रसङ्गः कार्य्यासिद्धत्वे रलोपे हशि चेत्यतः परत्वाल्लोप इति दीर्घेऽपि हशि चेत्यन्तरङ्गं प्रतिपदद्वयसापेक्षबहिरङ्गदीर्घस्य पूर्वत्रासिद्धमिति रलोपस्यासिद्धत्वादुत्वमेव किञ्च कर्मणो रोमन्थेत्यादिनिर्देशनासिद्धवचनं किमर्थमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं चेति भाष्येण तत्रत्यकैयटविवरणाभ्यां शास्त्रासिद्धत्वस्यैवाश्रयणाददोष इति दिक् ९ स्त्रीप्रत्यये चानुपसर्जनइति ॥ अनुपसर्ज्जने स्त्रीप्रत्यये तदादिनियमो न उपसर्जने तु भवत्येव करीपन्धेरपत्यं स्त्रीत्यर्थे

तस्यापत्यमित्यणि अणिञोरनार्षयोरिति ष्याङित्यणः ष्यङादेशे चापि च रूपम् कारीषगन्ध्यायाःपतिः कारीषगन्धीपतिः परमकारीषगन्धीपतिः ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषइति सम्प्रसारणं यथाऽत्र भवति तथा परमकारीषगन्ध्यायाः पतिः परमकारीषन्धीपतिरत्रापि भवति स्त्रीप्रत्ययस्यपतिं प्रत्युपसर्ज्जनत्वेऽपि परमशब्दार्थं प्रत्यनुपसर्जनत्वात् कारीषगन्ध्याशब्दस्यापि ष्यङन्तत्वात्कारीषन्ध्यामतिक्रान्ताऽतिकारीषन्ध्येति विग्रहेऽतिक्रान्तार्थम्प्रति स्त्रीप्रत्ययस्योपसर्जनत्वात्तदादिनियमसत्वादतिकारीषगन्ध्याशब्दस्यापि ष्यङन्तत्वान्न संप्रसारणम् । अत्र पण्डिताः इयं परिभाषा न कर्त्तव्या ष्यङोऽनुपसर्जनस्य सम्प्रसारणमित्यादिसूत्रकरणात् । अत्र समाधानं परमकारीषगन्ध्या यस्य स परमकारीषगन्ध्यः विनापि प्रत्ययं पूर्वोत्तरपदलोपो वक्तव्य इति परमपदस्य लोपे कारीषगन्ध्यस्य पुत्र इति विग्रहे कारीषगन्धीपुत्र इतीष्यते स नस्यात् अतः परिभाषयैव वारणम् ॥ यद्यपि संज्ञा सत्तायां विषये पूर्वोत्तरपदलोपे सत्याभामा भीमो भीमसेन इत्यादि तदुदाहरणात्तथापिस्तोः श्चुनेत्यत्र योगः संयोगः सम्पदस्य सत्याभामेत्यादाविव विनापीत्यतो लोपादिति शेखरे विरोधादसंज्ञायामपि लोप इति वदन्ति एतच्च परिभाषावर्णनं तस्याः प्रयोजनान्तरं नास्तीत्यभिमानेनैव वस्तुतस्त्वति खट्वायेत्यत्र याड्वारणम् परमखट्वायै इत्यादौ तद्भावनं परमकारीषगन्ध्याशब्दः प्रत्ययग्रहणपरिभाषया ष्यङन्तो न भवति इति परिभाषाश्रयणमनुपसर्जनत्वात्तदादिनियमेनात्र ष्यङन्तमपि तथापि ध्वनितं भाष्येपूर्वपदलोपो ऽप्यत्र चिन्त्यः । बहुधनोऽल्पधन इत्यादावपि तदापत्तेः ॥ यत्तु योगपदे सम्पदलोपोदाहरणं तत्र युजेरेव संयोगार्थकत्वेनादोषात् अत एवा-

व्यवहिते श्चुत्वसिद्धये स्तौ श्चौ श्चुरित्युक्तम्। भाष्यसूत्रकारमते ऽपि स्पष्टप्रतिपत्तये संयोगपदाध्याहार एवोचित इति दिक् १० इजादेश्च गुरुमतो ऽनृच्छः। इजादेःकिम् ववौ॥ गुरुमतः किम् उवोष। अनृच्छः किम् आनर्च्छे। न च ऋच्छत्यॄतामिति लिटि गुणविधानसामर्थ्यादाम्न भविष्यति किमनेन पर्युदासेनेति वाच्यम्। गुणविधानसामर्थ्येनामाऽव्यवहितेऽपि तत्प्रवृत्तेरिति शेखरे समाहितम्। तत्राशङ्का सूत्रे ऽनृच्छ इति पदाभावे आनर्च्छेत्यत्राम् प्राप्तः गुणो ऽपि प्राप्तस्तत्र प्रतिपदोक्तत्वादपवादत्वाच्च गुणे कृते इजादित्वाभावादामः प्राप्तिरेव नेति व्यर्थमनृच्छपदमत्र समाधनम् विभावयन्तु सुधिय इति पण्डिताः शेखरपङ्क्तिस्तुइत्थम् न च ऋच्छेर्लिटि गुणविधानसामर्थ्यादेव तत्सार्थक्यादिति सूत्रतात्पर्य्यादिति अनयापङ्क्त्या भाष्यसिद्धान्तो ऽप्यागत इति सूचितम्। तथा हि इयेषेत्यादावाम् व्यावृत्तये उपदेशे गुरुमतो ऽनृच्छइति उक्त्वा एवं तर्हि उच्छेराम्वक्तव्यः। अनृच्छ इति ज्ञापकादनौपदेशिकस्यापि गुरुमत्त्वस्याश्रयणे उञ्च्छांचकारेत्यादावसिद्धौ इयेषेत्यादावतिप्रसङ्गमाशङ्क्य उभयं न वक्तव्यमुपदेशग्रहणम् न करिष्यते कस्मान्न भवति इयेषेत्यादौ उक्तम् वा किमुक्तं सन्निपातविरोधादित्यनृच्छग्रहणं व्यर्थमेवेति भाष्ये स्थिते पूर्वशेखरे ऽनृच्छइति पर्युदासमाश्रित्येचो गुरोरनृच्छ इत्येव सिद्धे रादिग्रहणं मतुब्ग्रहणं च स्पष्टार्थमित्युक्तम्। इजादिगुरुमतेनैवानृच्छ इति पर्युदासः सार्थको नान्यथेति तद्भावस्तदपि चिन्त्यमेव संयोगे गुरुमत्त्ववतामेव ग्रहणापत्त्या इङ्गतौ इत्यादीनामसंग्रहापत्तेः॥ इचो गुरोरिति सामर्थ्यान्नायं दोषाऽन्यथाऽनृच्छ इत्येव ब्रूयादिति चेत्तावतापीचो यदि गुरुमत्त्वस्याश्रयणे इङादेरसंग्रहः उञ्च्छादेरेव संग्रह

इति दोषसद्भावात् वस्तुतस्तु गुर्विजादेरित्युक्त्वेतरत्कर्तु मशक्यमथ वा गुर्वादेरित्येवास्तु दयायासश्चेत्यत्रासग्रहणादकारगुर्वादेश्चेतद्यासेवेति नियमात्सिद्धेः न वा सेरौपदेशिकाकारगुर्वादित्वेनैतद्विषयकनियमे शाल्वादिप्रभृतिष्वाम्स्यादितिवाच्यम् । लाघवेन सामान्यनियमाश्रयणादिति दिक् ११ अतो दीर्घो यञीति सार्वधातुकेकिम् केशवः अङ्गना केशाद्वो ऽन्यतरस्यामिति वः अत्र केचित् सार्वधातुकग्रहणं मास्तु सुपि चेति सूत्रनियमादेवादोषात् सार्वधातुकभिन्ने यजादौ दीर्घश्चे त्तर्हि सुप्येवेति केशवशब्दादावप्रवृत्तेः समाधानन्तु राजभ्यामित्यादावपि दीर्घापत्तिरिति अतोदीर्घस्यसुब्विधित्वाभावेन न लोपः सुप्स्वरेति न लोपासिद्ध्यभावात्सुब्तद्याप्यधर्म्माश्रयविधौ च सुविधित्वादिति समाधानान्तरं तु तत्त्वप्रकाशिकायां द्रष्टव्यम् १२ ज्योतिरायुषः स्तोमः समासेऽङ्गुले सङ्ग इत्यतस्समास इत्यनुवर्तते आध्याम्नुत्तरस्योत्तरपदावयवस्य ष इत्यर्थः ॥ अत्र मूले समासेकिम् । ज्योतिषः स्तोम इत्युक्तम् । तत्र इण्कोरित्याधिकारात् किन्तु ज्योतिस्तोमोऽस्ति ब्राह्मणानामिति प्रत्युदाहर्त्तुमुचितमिति पण्डिताः । केचित्तु समास इत्यस्य निवृत्तावप्यस्य पदविधित्वात्समर्थपरिभाषया समास एवास्य प्रवृत्तिरिति समासग्रहणं चिन्त्यप्रयोजनमित्याहुस्तन्न । पदाधिकारस्यापदान्तस्य मूर्धन्य इत्यतः प्रागेव निवृत्तेः भाष्ये उक्तत्वात् । वस्तुतस्तु मूलाशय इत्थं योज्यः १३ नुम्विसर्जनीयशर्व्यवायेऽपीति षत्वस्य सात्पदाद्योरिति निषेधस्यापवादोऽयं तेन नुम्विसर्जनीयेति सम्बध्यते इति वाक्येऽपि प्रवृत्तिः । न च प्रत्येकमिति व्याख्यानान्निस्व इत्यत्रेवात्राप्यप्रवृत्तिरिति वाच्यम्॥ एवं तर्हि समस्तान्येव भीरुष्ठानाग्निष्टुदग्निष्टोमज्योतिष्टो-

मादीत्यन्तं समासेकिम् इत्यनेन तदधिकारीयभीरोः स्थानमित्यादित्रिसूत्री किमर्थेति प्रश्नाशयः। असमासेप्रवृत्तिविरहात्पुष्यार्था सेति तदुत्तरमित्यन्ये १४ रामाद्रामादित्यत्र मूले जश्त्वं वावसान इत्युक्तम् पूर्वं चर्त्वासिद्ध्या जश्त्वमिति मनोरमा अपवादत्वाज्जश्त्वं बाधित्वा चर्त्वं ततो जस्त्वमिति शेखरः जश्त्वाप्राप्तिविषये चर्त्वस्याचारितार्थ्यादपवादत्वसङ्गतेरिति शेखराशयः। अस्योपरि दूषणान्तरं षष्शब्दादौ पूर्वे षस्य ष एव चर्त्वं ततो जश्त्वे ष एव श्रूयेत जाक्षित्यादयः षडिति निर्देशेन षस्य टकार एव न तु षकार इति परिहारेऽपि पूर्वापरविरोधः शेखरस्यास्त्येव उपानदित्यत्र घत्वजश्त्वचर्त्वानीति तदुक्तेः॥ किञ्च चतुर्णामित्यत्र णत्वं द्वित्वमिति प्रतीकमुपादाय ननु द्वित्वं णत्वमित्येव युक्तम् पूर्वत्रासिद्धमद्वित्वे इति वचनादिदं वर्णद्वित्वेऽपि प्रवर्तते वाक्त्वागिति भाष्योदाहरणात् अन्यथा द्वित्वदृष्ट्या चर्त्वस्यासिद्धत्वाद्गस्यैव द्वित्वे तस्य चर्त्वे पूर्वत्र गश्रवणापत्तेरित्युक्तम् अस्मादपि पूर्वं जश्त्वं पश्चाच्चर्त्वमित्यायातीति पण्डिताः पदान्तविषये पूर्वं॥ जश्त्वमिति न्याय्यमेव वावसाने इत्यस्यापदान्तझलां चर्त्वविधानेन चारितार्थ्यात् अत्र पदाधिकाराभावात् अनुकरणं चानितिपरमिति ज्ञापकादनितिपरस्याप्यनुकरणस्य सत्वादवसाने त्यदाद्यनुकरणेत्यत् तत् इत्यादौ पक्षे चर्त्वस्यापीष्टत्वात् नत्विदमयुक्तं न ह्यनुकरणत्वभङ्गभियाशास्त्रस्य बाधश्चमत्कारतामुपैति पटत् इति इत्यादिषु अव्यक्तानुकरणस्यात् इताविनि शास्त्राणामप्रवृत्त्यापत्तिः तेषां वैयर्थ्यापत्तेश्चेत्यलं विस्तरेण १४ प्राचां ष्फस्तद्धितः गार्ग्यशब्दात्ष्फः आयनादेशे यस्येति चेति तद्धितनिमित्त इकारलोपः तद्धितान्तत्वे प्रयोजनं प्रातिपदिकसंज्ञा च ष्फान्तस्य तेन पिद्गौरेति सिद्धश्च ङीषिति तत्र सवर्ण-

दीर्घेण पित्त्वसामर्थ्यादप्रातिपदिकत्वेऽपि ङीषा च सिद्धिमाश्रित्य तद्धितग्रहणं प्रत्याख्यातम् गौकक्ष्यशब्दो गर्गादियञन्तस्तस्मात्क्रौड्यादिभ्यश्चेति क्रौड्यादिगौकक्ष्यशब्दात्ष्यङ् ततो यङश्चेति चाप् गौकक्ष्या ततः ष्फप्रत्यये विवक्षिते तद्धितेसंज्ञायां भस्याढे तद्धिते इति पुम्वद्भावे चापो निवृत्तिः ष्फप्रत्यये षित्वान्ङीष् गौकक्ष्यायणीति सिध्यति पुम्वद्भावश्च तद्धितत्वएव ष्फस्य संगच्छते पुम्वद्भावाभावे यजन्तत्वविरहात्ष्फो न स्यादिति कस्य चित्समाधानं न युज्यते तथा हि गौकक्ष्यशब्दपाठस्य क्रौड्यादिषु भाष्ये प्रत्याख्यातत्वात् । गौकक्ष्येति तु पाद्यञ्श्चेति चापि सिध्यति मास्तु क्रौड्यादित्वाष्यङ् न च गौकक्ष्यायणीतिन सिद्ध्येचापः ष्फप्रत्ययस्यापवादत्वादिति वाच्यम् । प्राचां ष्फइत्यत्र सर्वत्रेति सूत्रात्सर्वत्रेत्यपकृष्याप्राचां सर्वत्र ष्फविधानात् गौकक्ष्येति तूदीचां मते सेत्स्यति एवञ्च गौकक्ष्यापुत्र इत्यादौ ष्यङन्तत्वाभावेनष्यङ्सम्प्रसारणमित्यस्याप्राप्त्या गौकक्ष्यायाः सम्प्रसारिणप्रतिषेधो वक्तव्य इति वार्तिकमनारम्भणीयमित्यपरमनुकूलम् । किञ्च ष्फप्रत्यये विवक्षिते भस्याढे तद्धितइत्यस्य प्रवृत्तिरनुचितैवायनादशोत्तरमेव भसंज्ञायाः प्रवृत्तेः किञ्च ष्यङन्ते यञन्तत्वविरहेण ष्फस्याप्रवृत्तेः किञ्च तद्धितग्रहणमन्यतोऽपि विधानार्थं तेनासुरेरुपसंख्यानंनापूर्वमिति कैयटोऽप्येकदेशी तथा हि आसुरेरुपसंख्यानमित्यस्याग्रे भाष्ये छश्चेति वक्तव्यमासुरीयः इत्युक्तं तत्र सिद्धान्तः कैयटः आसुरिणा प्रोक्त इति विशेषेऽर्थेऽजश्चेति अणि प्राप्तछ एव क्रीयते लाघवादन्यथा द्विरासुरीयग्रहणं कर्तव्यं स्यादिति एतेनोप संख्यानस्यावश्यकत्वे प्राचामिति सूत्रस्थभाष्ये तद्धितग्रहणं प्रत्याख्यानमेवाद्रियेत इति तत्वप्रकाशिकायां द्रष्टव्यम् १५ टिड्ढेत्यत्र वार्त्तिकम्

नञस्नञ्ईकक्ख्युंस्तरुणतलुनानामुपसंख्यानमिति तेन ङीपि अन्तानुदात्ताविमौ गौरादिङीपि तु अन्तोदात्तामिति ग्रन्थकाराः तत्र पण्डिताः वार्त्तिके गौरादौ चानयोः पाठो मास्तु बह्वादिष्वेवानयोरस्तु पाठस्तत्र पाठान्ङीप् सिद्धः पक्षे वयस्यचरम इति ङीबिति स्वरद्वयसिद्धिरिति समाधानं विभावयन्तु सुधिय इति। अत्रेदं तत्त्वं तरुणतलुनशब्दौ त्रोरश्च ल इति उरन्प्रत्ययान्तौ यौगिकौ तरति प्रथमं वयस्तरति दुःखमिति वा यदाह दुःखतरणकं औणादिः तदापि ङीप्सिद्धये गौरादिपाठआवश्यको नेह वयस्यचरमइति प्राप्नोति एतच्च वयस्यचरमइति ब्रुवता तरुणतलुनयोरुपसंख्यानं कुर्वता वार्तिककारेण सूचितम्॥ सूत्रकारमतेन प्रथमवयोवाचिन एव ग्रहणात्तरुणतलुनयोरग्रहणमेव सर्वथेति गौरादिपाठस्तयोरिति बोध्यम्। मध्यान्हे तरुणो रविरित्यादौ प्रचण्डो रविरित्याद्यर्थमावश्यकं तरुणशब्दः प्रौढपर्यायोऽपि अथ तदर्थको यदा तरुणशब्दः प्रयुज्यतेऽथ वा तरुणतात्पर्येण वृद्धेऽपि प्रयुज्यतेऽथवाप्रौढ्यार्थको वा गृह्यते तत्तात्पर्य्येणोपसंख्यानमिति १८ घेर्ङिति अत्राङ्गस्य सुपीति चानुवर्त्तते अत्र पण्डिताः घेर्ङीत्येवास्तु यस्मिन्विधिरिति परिभाषया तदादिविधौ ङादौ सुपीत्यर्थेण सिद्धे ङित्ग्रहणं व्यर्थं प्रायोगिकङादेरसम्भवादौपदेशिकङादित्वं गृह्यते प्रवाहशब्दात्तृतीयैकवचनस्थाने आङ्याजरेत्याङादेशस्तु ङादेशएवास्तु प्रवाहवेत्यादिसिद्धये मत्यामित्यादौ तु ङेरामादेशे तस्य ङादित्वाभावादाण् नद्या इति न प्रवर्तेत ङितिकरणे तु अनुबन्धकार्य्यत्वादनल्विधाकार्य्यत्वादनल्विधावपि स्थानिवत्वाज्जायते यद्यपि तथाऽपि ङेरामित्यत्र ङेर्ङामित्युक्ते न कश्चिद्दोष इति प्रश्नः। अत्रोत्तरं ङामादेशे कृते लशक्वितसंज्ञा आण्नद्या इत्यादि च प्राप्तौ

तत्राडागमस्याङ्गत्त्वाद्वार्णपारिभाषयान्तरङ्गाया अपीत्संज्ञाया बाधे ङ्कारश्रवणापत्तिराडागमस्य नित्यत्त्वमपि इति केचित्समादधत्ते वस्तुतस्तु इत्ग्रहणं स्पष्टार्थम् आण् नद्या इत्यादौ सेनान्यामित्यादौ ङामादेशश्चरितार्थ इति नद्यावन्ते परत्वान्ङामादेशे सकृद्गतिन्यायादाडागमाप्रवृत्तेर्यणा रूपासिद्धेः न चाडागमाभावे नुट् स्यादिति वाच्यम् निरनुबन्धपरिभाषया आमग्रहणेन ङामोऽग्रहणादत एव सानुबन्धो ङामादेशश्चरितार्थः न चैवं रीत्या नुटोऽभावे ऽपि आड्व याट्स्याटोरप्यप्रवृत्तिः स्यादिति वाच्यम् । लक्ष्यव्यवस्थापकावेतौ न्यायौ पुनः प्रसङ्गेति सकृद्गतेतिवल्लक्ष्यानुरोधाद्याट्स्याटोर्विषये पुनःप्रसऽङ्गाद्याट्स्याटावित्यदोषात् कथमन्यथाऽटि कृतेऽपि यदागमन्यायात्परादिवद्भावाद्वाऽऽमत्वेन प्राप्तस्य नुटो वारणं भाष्योक्तं सङ्गच्छेत आगमादेशे परत्वात्कृते पुनःप्रसङ्गादाट् तस्मिन्कृते सकृद्गतिन्यायान्नुटोऽभाव इति भाष्यमते यथासिद्धिरिष्टस्य तथाऽत्र पक्षे ङामि कृते सकृद्गत्याऽऽटो भावः पुनःप्रसङ्गाश्रयेण याट्स्याटोः प्रवृत्तिरेव न भेदो रूपासिद्धिः समेत्र अथ वा भवत्वाट् ङस्येत्संज्ञा तु लशक्वित्यत्रोपदेशे ऽजित्यत उपदेशपदानुवृत्त्या सेत्स्यति प्रत्ययस्योपदेशे आदिभूतं यल्लशकु तस्येत्संज्ञेति व्याख्यानात् एतच्च चुटूइति सूत्रे भाष्ये ध्वनितं तथा हि चञ्चुप्चणपोश्चकारप्रतिषेध इति वार्त्तिकप्रत्याख्यानाय भाष्ये उक्तं यकारादीचञ्चुपचणपौ किं यकारो न श्रूयते लुप्तनिर्दिष्टो यकार इति अत्र यकारे लुप्ते ऽपि प्रत्ययादिश्च इतीत्संज्ञाप्राप्त्योपदेशे आदिश्चकारो नास्तीति तात्पर्य्यं फलम् कल्प्यम् सामर्थ्यकल्पनाया अनौचित्यादेवश्च लशक्वित्येतत् सूत्रे ऽपि साहचर्य्येणोपदेशपदानुवृत्त्याऽदोष इति तत्त्वप्रकाशिकायां द्रष्टव्यम् १७ अनेकाल् शित्सर्व-

स्य । अत्र शेखरः नानेकालशिदिति तु नोक्तम् तन्न युक्तम् अनन्तरत्वादादेः परस्येत्यस्यैव निषेधे हि ङिद्दनेकाल् अलोऽन्त्यस्येत्येवान्त्यस्य सिद्धे ङिच्चेति व्यर्थमेवेत्यत्रानन्तरन्यायो न प्रवर्त्तते अत्र समाधानं कुर्वन्तु सुधिय इति अत्र पण्डिताः यद्यप्येतत्कौस्तुभेऽप्युक्तम् अन्त्यस्यादेरिति चानुवर्त्यानेकाल् शिदाद्यन्तयोर्नेति ङिद्नेकालोऽन्त्यार्थं ङिच्चेत्यारभ्यव्यमिति तथापि युक्तः शेखराशयः । ङिच्चेत्यारम्भात् पदबाधे क्लेशात्पदलाघवाद्यथान्यासमुचितमिति १८ अदर्शनं लोपः । अत्र षष्ठी स्थानइत्यनुवर्तते तेन षष्ठ्यन्तस्य स्थाने यददर्शनं तल्लोपसंज्ञेत्यर्थः । तेन त्रपु इत्यत्र क्विपोऽप्रसङ्गात्तददर्शनस्य लोपसंज्ञाऽभावाद्ध्रस्वस्य पितीति तुक न भवतीत्याह प्रसक्तस्येति तदुक्तं शेखरे तस्मात् त्रपु इत्यत्र क्विपोऽदर्शनस्य सत्वेन न प्रत्ययलक्षणेन तुगापत्तिर्दोष इति न चायं शेखरग्रन्थः स्थानिवत्सूत्रस्थभाष्यविरुद्धस्तथा हि भाष्ये शब्दस्य नित्यत्वाद्बुद्धेरेव स्थानितादेशता चेति पक्षे सेनानीरित्यादौ कर्मण्यण् वृद्धिः क्विब्बुद्धेरिति स्थानिवत्त्वेन वृद्धिः प्राप्नोतीत्याशङ्क्य षष्ठीनिर्दिष्टस्य स्थाने यत्रादेशस्तत्रैव स्थानिवदिति समाहितं प्रकृते क्विपः प्रातिपदिकेप्रत्ययलक्षणे न तुगापत्तिः प्रत्ययलक्षणसूत्रेणापि स्थानिवद्भावएवानूद्यत इति चेन्न । त्रपुइत्यत्र दोषाभावेनैवात्र भाष्ये ग्रामणीरित्यत्राणप्रसङ्गे प्राप्ते क्विप्प्रसङ्गे बुद्धेरेव स्थानिवद्भावाद्वृद्धिमाशङ्क्य योऽत्राण् प्रसङ्गः क्विपाऽसौ बाध्यते इत्युक्तम् सत्सूद्विषेति क्विपोऽविधानादणोऽत्राप्रसङ्ग इति कैयटः अस्माद्भाष्यात्षष्ठीनिर्दिष्टस्य स्थानिवद्भावो बोधित एव त्रपु इत्यत्र तु अण इव क्विपः प्रसङ्गो नास्तीति तत्र प्रत्ययलक्षणप्रदर्शनमेकदेशिन इति तत्त्वम् । ग्रामे तिष्ठतीत्यत्र ल्यबन्तार्थानि-

रूपितार्थाधिकरणत्वाभावत्क्तिबन्तार्थानिरूपितधात्वर्थक्रियायाः प्रकृत्यर्थत्वाभावाच्च प्रकृते पष्ठीस्थाने इत्यस्य भाष्ये ऽनुवर्त्तितत्वाच्च । वस्तुतस्तु स्थानिवत्सूत्रोक्तपष्ठीनिर्दिष्टस्यादेशः स्थानिवदितिभाष्येणैव गतार्थता प्रकृतसूत्रे षष्ठीस्थानइत्यस्यानुवृत्तिप्रदर्शनं भाष्ये स्पष्टार्थमेवेति । यत्तु अदर्शनमिदित्येवास्तु अदर्शनस्येत्संज्ञा तस्य लोप इति न कर्तव्यमुपदेशेऽजित्यादिसूत्रैरदर्शनस्यैव विधानादिति तन्न कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणे भृञामित् तिष्ठतेरित् प्रत्ययः स्यादिसादिष्वित्पदेनादर्शनप्रतीत्यापत्या लक्ष्यासिद्धेः तपरसूत्रस्य कृदित्यादिविषयं स्यात्तक्रकौण्डिन्यन्यायेनेत्यदर्शनबोधिका संज्ञा स्यान्न तु तत्कालबोधिकेति संज्ञयोर्विरोधाच्च समावेशासम्भवः इदित्येकमात्राकालिकेकाररूपस्य भावस्य दर्शनरूपत्वाभावात् तपरसूत्रेणास्यासंज्ञायाः बाधो ऽस्या निर्विषयतापत्योपदेशे ऽजित्यादीनास्वरूपमात्रबोधकतापत्तिः स्यात् इदितो नुमित्यस्य त्वयमर्थः स्यात् इदिकारो ऽदर्शनं यस्य सामर्थ्यात् यस्येकारो नास्ति अनप्रभृतेस्तस्यैव नुम् स्यात् चिति प्रभृतेरिकारवतो नस्यात् अथाऽपि कथं चिदन्तादितइति व्याख्यानात्स्याद्भृजामिदित्यादिष्वतपरनिर्देशेन निर्वाहे तु अदर्शनमिदिति सुवचमेव १९. द्विस्त्रिश्चतुरिति कृत्वोर्थे । अत्र शेखरः इसुसोरिति उत्तरसूत्ररीत्या सुच इति सूत्रयितुमुचितम् । सुजन्तस्य पदस्येत्यर्थादिति अत्र दूपणं चतुष्करोतीत्यत्र दुदुपधस्येति नित्यपत्वापत्तिः सुच इत्यस्यासिद्धत्वात् अप्रवृत्तेः । सिद्धान्ते तु चतुर्ग्रहणसामर्थ्यान्नासिद्धत्वमित्यदोप इति अत्र समाधानमिदुदुपधस्येत्यत्रापि सम्बन्धापत्तेः सिद्धान्ते तु चतुर्ग्रहणसामर्थ्यान्नासिद्धत्वमित्यदोप इति अत्र सपाधानमिदुपधस्येत्यत्रापि सम्बन्धापत्तेः भाष्ये तु इदु-

दुपधस्येत्यनुवर्त्य कृत्वोर्थइत्येव सुवचमिति स्थितम् तदुपपत्ति-स्तु सुच इत्येव सिद्धे गुरुभूतनिर्देशादत्रासिद्धत्वमिति चतुष्क-रीतीत्यत्रेष्टौ विकल्पः संपन्न इति तत्त्वप्रकाशिकायां द्रष्टव्यम् २० इको गुणवृद्धी सूत्रप्रयोजनम्वार्तिकमिग्ग्रहणमात्सन्ध्यक्षरव्यञ्ज ननिवृत्त्यर्थमिति अत्रकैयटः अकारस्याकारे रूपे विशषो नास्ती-त्युक्तमिति अत्र केचिद्विशेषं दर्शयन्ति अकारस्याकारे गुणे कृते पेचिथेत्यत्र न शसददवादिगुणानामिति निषेधादेत्वाभ्यासलोपो न स्यात् वस्तुतस्तु विशेषो नास्त्येव थलि च सेटीत्यरम्भसाम-र्थ्यान्न विशेष इति पेचिथेत्यत्रैव ववरिथ ससरिथेत्यादावपि निषेधानापत्तिः नशसददेतिसूत्रे गुणस्य तु न वैयर्थ्यम् पपर तुः पपरुरित्यादावृच्छत्यृतामिति गुणे कृते एत्वाभ्यासलोपनि-वृत्त्या चारितार्थ्यात् अत्र केचिदित्थं समाधानं कुर्वन्ति केवल-दीर्घस्थानिकगुणविषये नशसेत्यस्यसावकाशत्वेऽपि गुणग्रहण-मपहायतत्स्थानेइग् ग्रहणमेव ऋग्रहणं वा कुर्य्यात् सामान्येन गुणग्रहणसामर्थ्याद्विजातीयस्थानिका विजातीयगुणस्यैव ग्रहणा-दत्र विजातीयस्थानिकाविजातीयगुणस्याभावादिति कैयटग्रन्थे न काप्यनुपपत्तिः अथवा थलि च सेटीतिसूत्रस्थभाष्यरीत्या न शसददेत्या न शसददेत्यत्र गुणग्रहणं गुणावयवपरं गुणावयवो यो ऽकारस्तस्य निषेधस्तच्चनुनविथेत्यत्रैव सम्भवतीत्यदोष इति पण्डिताः। वस्तुतस्तु अकारान्तधातोरेवारस्याकारस्याकारे गुणे कृते न विशेषतेति कैयटाशयः अकारोपधहलन्ते तु अलोऽन्त्य-स्येति हल एव गुणः नाचः इक्परिभाषाया अभावात् अथ पु-कि अन्तः लघ्वी उपधा पुगन्तश्च लघूपधाचानयोः समाहारः पुगन्तलघूपधमिति समासमाश्रित्य व्यधिकरणान्वयादङ्गावय-वलघूपधाया गुण इति व्याख्यानमालम्ब्य पेचिथेत्यादौ विशे-

षोक्तिसम्भवो ऽपि न युक्तः वार्तिकप्रयोजनम् प्रत्याख्यानएवास्य प्रकारस्य भाष्ये उक्तत्वात् किं च अयं प्रकारो न वार्त्तिकसम्मतो ऽन्यथाकारसंध्यक्षरेत्याद्येव ब्रूयादात्सन्ध्यक्षरेति न-ब्रूयात् पुगन्तन्तस्याङ्गस्य गुणो लघूपधस्याङ्गस्य गुण इति सामानाधिकरण्येनान्वये ऽलो ऽन्त्यपरिभाषोपस्थितिपक्षएव वार्त्तिके आदित्युक्तिस्सङ्गच्छते पुगन्तलघूपधस्येति सूत्रं तु उपधावतो ऽङ्गस्य चेत्तर्हि लघूपधस्येति नियमार्थं स्यात्तेनैहितोहितेत्यादौ गुणो गोपयतीत्यादौ नियमबाधो ऽनुगुण एवेति तदपि न । व्यपदेशिवद्भावेन तत्त्वात् २१ क्ङिति प्रतिषेधे तन्निमित्तग्रहणं कर्त्तव्य किम्प्रयोजनं उपधारोरवीत्यर्थं न वक्तव्यं ज्ञापकात् प्रतिषेधो भविष्यति यदयमिकोझल् हलन्ताच्चेति सनः कित्वं शास्ति तज्ज्ञापयत्याचार्य्यो भवत्युपधानुपधा वा तस्यापि निषेध इति ग्रन्थः । अत्र केचित् हलन्ताच्चेति सूत्रस्य न वैयर्थ्यं हलस्सनि सन्यङोरिति द्वित्वे ऽत्र लोपोऽभ्यासस्येत्यभ्यासलोपे दम्भ इच्चेति हलन्ताच्चेति सनः कित्त्वे धिप्सतीत्यत्रानिदितामिति नलोपार्थत्वात् कित्वस्य दम्भ इच्चेत्येव सिद्धेर्हलन्ताच्चेति सामान्यस्यारम्भात् समाधानन्तु सृजिदृशोर्झल्यमकिति सनीको झल्दंभेरिति लघुनोपायेन सिद्धे हलन्ताच्चेति ज्ञापकमेवेति पण्डिताः । वस्तुतस्तु दम्भेरित्युक्ते सनि मीमाघुरभलभशकपतपदामच इसिति मीमादीनामित्यादेशे मित्सतिदित्सतीत्यादौ गुणाभावार्थं हलन्ताच्चेति सनः कित्वार्थमावश्यकं तथा सनीवन्तर्द्ध तीडागमाभावे दुध्रूर्षतीत्यादिसूत्रारम्भे एव सिध्यति ज्ञापकपरभाष्यस्य त्वयमाशयः प्रतिलक्ष्यं लक्षणभेदः यद्यपि नलोपामागमाभावयोश्चरितार्थो विधिस्तथाप्युपधागुणनिषेधार्थो हलन्ताच्चेत्यचरितार्थ

इति ज्ञापकत्वं तस्येति २२ नलोपः प्रातिपदिकान्तस्य ॥ अन्तग्रहणमत्र ज्ञापकम् पदस्येत्यधिकारः तत्क्वचित्स्थानषष्ठी क्व चिदवयवषष्ठी तेन मादुपधायाश्च मतोर्वोइत्यत्रावग्रवषष्ठीत्वे पदावयवमतोर्मस्य व इत्यर्थे वृक्षवन्तावित्यादौ वत्वसिद्धिरन्यथा वृक्षवान्नित्यत्रैव स्यान्न तु वृक्षवन्तावित्यत्रेति शेखरे स्थितम्। वस्तुतस्तु व्याख्यानादेतल्लब्धमन्तग्रहणं स्पष्टार्थमिति पदस्येत्यत्र भाष्ये ध्वनितं तत्र हि नलोपो प्रत्याख्यायतेस्थाने षष्ठी अन्तग्रहणाद्वा नलोपे इत्युक्तम्। लाघवाद्व्याख्यानेनैव षष्ठ्यर्थनिर्णये षष्ठी स्थाने इति योगो ऽन्तग्रहणं च न कार्य्यमिति भाष्याशयः १३ नस्माच्छसो नः पुंसि। ननु शसो नुम् इत्येव सूत्रमस्तु अकःमवर्णे इत्यतोऽकीत्यनुवर्त्याकः परस्य शसो नुम्स्यादित्यर्थः। परत्वान्नुमि पश्चात्प्रथमयोरिति पूर्वसवर्णदीर्घे संयोगान्तलोपे सिद्धं रामानित्यादि लिह इत्यादावकः परो न शस् एतान् गाः पश्येत्यत्रापि औतो ऽम्शसोरित्येकादेशआकारे कृते शस्परत्वाभाव इति दोषाभाव इति चेन्न। विश्वप इत्यादावातो धातोरित्यालोपे पूर्वस्मादपि विधावचः परस्मिन्निति स्थानिवद्भावे ऽकः परः शस इति नुमापत्तेः। पञ्चमीसमासप्रत्याख्यानपक्षे तु न दोषः अष्टावित्यत्रौशादेशे आत्वे कृते नुम्स्यादिति वाच्यम्। नकारस्यात्वपरनिमित्तं वहिरङ्गमन्तरङ्गे नुमि कर्त्तव्ये तस्यासिद्धत्वादकः परत्वाभावात् अथ वा औशादेशः क्रियते प्रियतिस्र इत्यादौ त्वचि रेण बाधः अत्र समाधानं कुर्वन्तु सुधिय इति पण्डिताः अत्रेदं समाधानं रामानित्यत्र पूर्वसवर्णदीर्घे नित्यत्वात्कृते पश्चात्सकारस्य नुमापत्तिः मित्वसामर्थ्यात्पूर्वं नुम् चेत्कार्य्यकालपक्षे ऽन्तरङ्गे ऽट्कुप्वाङिति णत्वे कर्तव्ये संयोगान्तलोपस्यासि-

द्धत्वापत्तिः अत्र पक्षे ऽसिद्धत्वाश्रयणे तस्मादित्येव लिङ्गम्। अथ मित्वसामर्थ्यं न्नुटि कर्त्तव्ये नुम्करणसामर्थ्यादित्यर्थो नकारादेशे कर्तव्ये तत्सामर्थ्यादिति वाच्यम्। स चायुक्तः पुंसि गा इत्यत्र नुमो नकारादेशस्य चारितार्थ्यात् शसः शकारस्योरण्रपरसूत्रस्थभाष्यरीत्या शसःपरत्वाच्छस इत्यस्यावयवषष्ठीप्राप्तिर्बोध्या किञ्च मित्वसामर्थ्यादकः शसो ऽचि परे नुम्यादित्यर्थे ऽक एव नुमापत्तौ रूपासिद्धिः तस्मादिति कृते तु न दोषः शसो ऽची ऽसम्भवादचीति न सम्बध्यते तस्मादित्युत्तरस्येत्यस्य प्रवृत्त्या ऽचो नुमित्यर्थे दोष इति चेत्तर्हि रामानित्यादौ णत्वदोषस्य वारणे निर्देशाश्रयणे प्रतिपत्तिक्लेश इति सूत्रकाराशयः। शसो नः पुंसीत्यपि न युक्तम्। अकः शसवयवेऽचि पूर्वपरयोरचि नत्वादेशापत्तेः एकः पूर्वपरयोरित्यधिकारे पञ्चमी सप्तमी च नैकःस्यानित्यत्वबोधिकेति सिद्धान्तात् अचीति निवृत्तौ तु तव प्रमाणन्नास्ति भाष्ये तस्मात्किं एतान् गा इति न्यासान्तरे दोषान्तरोपलक्षणमिति मम दोषो न। यत्तु औशादेशइत्युक्तम् तन्न औ इत्युक्ते सर्वादेशसिद्धे शित्वं व्यर्थम् अथ औशादेशस्तर्हि संहितायामष्टाभ्य औशित्युक्ते गौरवमसंहितायामप्यष्टाभ्य औइति गौरवम् एव औशि कर्त्तव्ये जश्शसोरनुमीयमानं यद्यपि बहिरङ्गं तथापि नुमागमएव बहिरङ्गः अर्थस्य पुंस्त्यस्याधिक्येनापेक्ष्यत्वात् अर्थकृतबहिरङ्गत्वं नास्तीति तत्वप्रकाशिकायां दूषितमेव किञ्च नुमि कृते ज्ञानगौरवमुकारमकारयोरित्संज्ञा कर्त्तव्या मिदचइत्रस्योपस्थित्याऽचः परत्वं बोधनीयं संयोगान्तलोपे पद संयोगसंज्ञाअपेक्षते इति पाणिनेरनियोक्ता न दृश्यतइति युज्यताम्। यदि तस्मादित्यस्य प्रत्याख्यानेऽत्याग्रहस्तर्हि शसो नः पुंसि इत्यत्राको दीर्घ

इति पूर्वसवर्ण इति चानुवर्त्य पञ्चम्या विपरिणाम्याकः पूर्वस-
वर्णदीर्घात्परस्येति व्याख्यायतां किमनेन तस्मादित्यननेति त-
त्वप्रकाशिकायां स्पष्टम् २३ हल्ङ्याभ्यो दीर्घात्सुतिस्येति अत्र-
मनोरमायां हल्ङ्यापस्सोरित्येव सूत्रयितुमुचितम् तत्र शब्द-
रत्ने सुइदं तिस्योरुपलक्षणमन्यथाविभाराज्यमिति न सिध्येत्।
अविभरमृइति स्थितेरुत्वासिद्ध्या संयोगान्तलोपे रोरीति लोपे
संयोगान्तलोपस्य पूर्वत्रासिद्धत्वाड्ढलोप इति दीर्घो न स्या-
दिति अयं ग्रन्थः शेखरविरुद्धस्तत्रहि अजर्घाइति भाष्यप्रयो-
गात्पूर्वत्रासिद्धमित्यत्र पूर्वपदेन लोपसूत्रस्याग्रहणबोधनादित्यु-
क्तम् अत्रेत्थं विरोधपरिहारः भाष्यप्रयोगेण साधुत्वस्यासति
पक्षे स्वीकारादिति प्रकृते तु तिस्योर्ग्रहणयत्ने स्थिते तत
एव साधुत्वं न भाष्यप्रयोगेण साधुत्वस्यास्य सतिपक्षे स्वीका-
रात् नासूया कर्तव्या यत्रानुगम इति पङ्क्तिविंशतीति सूत्रस्थ-
भाष्यादिति परिगणिताः। वस्तुतस्तु शेखरोक्तः सम्यगेव पितू-
राज्यमित्यत्रसूत्रकारसिद्धान्तेऽपि संयोगान्तलोपस्यासिद्धत्वाद्दी-
र्घो न प्राप्नोतीति रोरीति लोपस्याश्रयासिद्धत्वे ऽपि संयोगा-
न्तलोपस्यासिद्धत्वेनोक्तभाष्यप्रयोगेणैव यद्वा नमुन इत्यत्र न
ने इत्येव कर्तव्ये मुग्रहणं योगविभागार्थं नेति मुनेति काचिद-
सिद्धत्वन्नेति व्याख्याय प्रयोगाणां निश्चित्य नातिप्रसङ्गः
आश्रययोगविभागार्थं नेति मुनेति नदासिध्यर्थत्वात् अत एव
प्रत्ययः पर इति रेफस्य लोपः विसर्गः अजर्घा इति भाष्यस्या-
श्रयात्सिद्धत्वे ऽप्युपपत्तिरस्ति अथ वा कल्प्यमध्यत्रैव तात्पर्यं
तस्य दोपः संयोगादिइत्यादिवार्तिकानि योगविभागसिद्धानीति
तत्त्वम् २४ वदव्रजहलन्तस्याचः हलन्तोऽच इत्येव सिद्धे वद-
व्रज्योर्ग्रहणम् अतोहलादेरिति वैकल्पिकदीर्घबाधनार्थं ननु

वदव्रज्योरच इत्येवास्तु अजग्रहणसामर्थ्याद्धलन्तस्याच इत्यर्थो भविष्यति वदिव्रज्योरवयवस्याच इति नार्थः अतोल्नान्तस्येत्यतो ऽत इत्यनुवृत्त्यैव सिद्धे तस्य वैयर्थ्यात् अजन्तार्थत्वन्तु नास्ति सिचिवृद्धिःपरस्मैपदेष्वित्येव सिद्धेः अनिगन्तार्थमिदमित्यपि न अचिकीर्षिदित्यत्र ण्यल्लोपाविति वचनादतो लोपविधानात् अपासीदित्यत्र वृद्धौ नास्ति विशेषः अजन्तानामित्यनेन सिद्ध्यसम्भवात् तदेतदाहुर्भाष्यकाराः एवन्तर्हि इदमेव हलग्रहणमनुसृतं हलग्रहणमनन्यार्थम् अज्ग्रहणमनिगर्थमिति अभाक्षीदराक्षीदित्यादिसिध्याऽच आन्तर्याश्रयणे ऽपि विध्यर्थमित्यर्थः अन्यथाचकासीदित्यादावप्यतिप्रसङ्गः स्यात् तदुक्तंभाष्ये सिद्धान्ते व्यवाये तु न भवति यदि सिचानन्तर्य्यं विशेष्यतइति अथानिगर्थमिति भाष्यस्यायमर्थः अग्ग्रहणाभावइक्परिभाषोपस्थाने अभैत्सीदित्यादावेव स्यान्न तु अभाक्षीदित्यादाविति अन्तग्रहणन्तु स्पष्टार्थमन्यथा हलो ऽच इत्युच्यमाने अजन्ताङ्गस्य हलः स्थाने वृद्धिः स्यादित्ययमप्यर्थ आशङ्क्यतेति कैयटे स्पष्टार्थम् । अत्रैष विचारो ऽनुचितशेखरे स्पष्टत्वात् २५ न पदान्ताट्टोरनाम् विशेष्यविशेषणभावादेवान्तपदे लाभे स्पष्टार्थन्तादिति शेखरः पदान्ताद्विति सूत्रेशेखरे अन्तग्रहणं पदान्तकार्य्यार्थं अन्यथा पदविधित्वापत्त्या समर्थपरिभाषोपस्थितेरसमर्थे तिष्ठति कुमारीच्छत्रं हरदेवदत्त इत्यादौ न स्यादित्युक्तम् तस्यायं भावः नपदान्तादित्यत्र तु न । समर्थपरिभाषोपस्थितेः षण्णामित्यत्र तदुपस्थित्यैव नपदान्तादित्यस्यानुपस्थित्यानामित्यस्य वैयर्थ्यापत्तेः समर्थपरिभाषा प्रतित्रिपादिस्थएव नपदान्तादित्यस्यासिद्धत्वान्न तस्या अत्रोपस्थितिरिति न पूर्वापरविरोधश्शेखरस्येतिपण्डिताः नपदान्तादि-

स्यत्र येनविधिरित्यस्यानित्यत्वबोधनार्थमन्तग्रहणम् तेन समासप्रत्ययविधौ प्रतिषेध इत्यादिवार्त्तिकसूत्रकारेणापि बोधनमिति नापूर्वम् किञ्च निङ्ङ तिङ इत्यत्रातिङ् ग्रहणं पचतिभवति इत्यादौ माभूदिति कृतम् । तत्र तु समर्थइत्येव सिद्धं तत्रैकार्थीभावएव सामर्थ्यमित्यातिङिति ज्ञापकात्पदकार्य्ये ऽपि क्व चित्समर्थपरिभाषानुपस्थित्यैव तुकि सिद्धे पदान्ताद्वेत्यन्तग्रहणमपि स्पष्टार्थम् । किञ्च विशेष्यविशेषणभावे कामचारस्यापि बोधनार्थमन्तग्रहण तेनोतश्च प्रत्ययादसंयोगपूर्वात् उदोष्ठ्यपूर्वस्येत्यत्रोकारयोः संयोगपूर्वः ऋकारो य ओष्ठ्यपूर्व इत्यादिव्याख्यातं भाष्ये सङ्गच्छते अन्यथोकारान्तस्यासंयोगपूर्वत्वग्रहणे ऋकारान्तस्यौष्ठ्यपूर्वत्वग्रहणे वाद्राऽनुहि इत्यत्र हेर्लुक् स्यादुकारान्तप्रत्ययस्यासंयोगपूर्वत्वाकारो ऽसंयोगपूर्व इति व्याख्याते न दोषः एवं सङ्कीर्ण इत्यत्र धातुर्य ऋदन्तः स ओष्ठ्यपूर्व इत्यर्थे अत्रैव स्यादिति येनेत्यत्र भाष्ये स्पष्टम् २६ ङसिङसोश्च अत्र ङिदसीत्येवसिद्धे ङसग्रहणं स्पष्टार्थमिति पण्डिताः ङिदसइत्युक्तेः प्रत्ययग्रहणानापत्त्या पदान्तादित्यस्य सम्बन्धे हरेरित्यादौ न स्यात् नियमात्पदान्तादेङो ऽति पूर्वरूपं चान्ङिदसो ऽकारस्यैवेति पुंसोऽसुङिति असुङित्येकदेशस्याभो ऽनुकरणादिच्छाक्यचि अस्यतीति भवति तस्य देवदत्तो ऽस्यतीत्यादावेव प्रवृत्तिः स्यात्प्रकृतिवदनुकरणमित्यतिदेशेन ङिदसः सम्भवात् अजहत्स्वार्थपक्षे प्रक्रियादशायांकल्पितेनतास्यासो ऽर्थवत्वाच्च अत एव नमस्कृत्येत्यत्रनमः पदस्यार्थवत्वं नोपपदविभक्तिरित्यनेन द्वितीयावारणं न त्वर्थवत्परिभाषया नमस्यो ऽनर्थकत्वे गतिसंज्ञा विरहान्नमस्पुरसोरिति सत्वस्यैवानापत्तिः । अनिनस्मिन् ग्रहणेऽनर्थकस्यापि ग्रहणाच्च प्रत्ययाप्रत्ययोरिति प्रत्ययङिदसो-

ग्रहणं तु न सा परिभाषैव नास्ति कथमन्यथाचार्य्यो ङसो ग्रहणं कुर्य्यात ङसेश्चेत्यपि न युक्तम् ङश्चसश्चेतिद्वन्द्वे प्रत्येकादेशापत्तेः ङान्त सांतपदसम्बन्ध्यति परस्येति नार्थः । नन्वेवन्तर्हि एङः पदान्तात् ङिदंश इति ङसोश्चातीति वा वक्तव्ये पृथक्सूत्रारम्भसामर्थ्यादेवास्य पदान्तविषयत्वादपदान्त एङ् तु ङसोः पर त एव सम्भवतीति न दोष इति चेत्सत्यम् । ङसिङसोर्ग्रहणे तु सामर्थ्यकल्पनाश्रयणीयस्यात्प्रत्ययत्वस्य निश्चयात् अत एव ऋत उदित्यस्य व्याख्यानमृदन्तादङ्गादिति सङ्गच्छते ङसिङसोः प्रत्ययाभ्यामङ्गाक्षेपादन्यथा कर्तुः अस्यतीत्यत्रोकार एकादेशपरभाष्यं न सङ्गच्छते ङसिङस्प्रत्यया भ्यामङ्गाक्षेपे प्राप्नोतीति पदादतस्तथाभूतात् व्याख्यानाच्च ङिदसस्सम्भवात् पदान्तग्रहणस्योत्तरार्थत्वेऽपि ङिदसग्रहणान्मध्येऽसम्बन्धो ज्ञायते सख्युर्यः पत्युर्नः जनिकर्त्तुरित्यादिनिर्देशैः प्रत्ययाप्रत्यययोरिति परिभाषाश्रयणेन वा ङिग्रहणे तु प्रतिपत्तिक्लेशा एवेति दिक् २७ समः सामि अत्र सूत्रे शेखरे समो मिङिति इगिति वा न कृतं परिभाषाज्ञानगौरवापत्तेरित्युक्तम् तत्र साकच्कार्थत्वात् सम्यादेशस्यान्यथा समकअच इति स्थिते मिङादेशे ङिच्चेत्यस्य प्राप्तेः मिङादशस्य ङित्त्वादन्त्यस्यः स्यात् समाधानन्तु वहिरङ्गकुत्सादिनिमित्तकत्वेनाकचो वहिरङ्गत्वादादेशोत्तरमेवाकजितिअथैतत्सूत्रभाष्यप्रामाण्येनात्राकचोऽनभिधानमेवेति पण्डिताः । वस्तुतस्तु समः समीति सूत्रे ऽकचोऽनभिधानकल्पनं भाष्यप्रामाण्येन नोपलभ्यामहे किन्तु इदमोऽन्वादेशे ऽनुदात्त इति सूत्रे भाष्ये विचित्रास्ताद्धितवृत्तय इत्यकच् न ज्ञायत इत्युक्तम् । तद्भाष्यप्रामाण्येनात्राकचोऽभावे मिङित्युक्तेरूपाविशेषोक्तिः शेखरस्य युक्तैव किञ्च सम्यगर्थसशब्दे कुत्सासम्भवोऽपि नास्ति सूत्रका-

रेण तु समिग्रहणे विष्वग्देवयोरित्यनुवृत्तिर्माभूदिति कृतम्। यदा तु टेरित्यनुवर्त्यसम इत्युच्यते तदा न किञ्चिद्दुष्टमिति तत्वप्रकाशिकायां स्पष्टम् २८ सार्वधातुकार्द्धधातुकयोः ननु पिदार्द्धधातुकयोरित्येव कर्त्तव्य मार्द्धधातुकसाहचर्य्याद्धातोरित्युच्चार्य्य विहितस्य पितोग्रहणात्सुलु इत्यादौ न दोषः सार्वधातुकमपिदिति सूत्रं मास्तु समाधानं साहचर्य्यमनित्यज्ञापनार्थत्वं सूत्रस्येति कृत्वोर्थग्रहणं सूत्र इति न्यासेन शेखरे खण्डितमेव फलन्तु सिजभ्यस्तविदिभ्यश्चेत्यत्र सिच्साहचर्य्यमनादृत्याभ्यस्तात्परस्य ङित्सम्बन्धिनो लङ्स्थानिकस्यापि झेर्जुस्सिद्धोऽदद् अबोभुवुरिति पण्डिताः। वस्तुतस्तु सार्वधातुकमपिदिति न सादीनां ङित्वार्थे तेनहतो हथ इत्यादावनुनासिकलोपः ग्रहिज्यादिषु सम्प्रसारणादि सेत्स्यति। न च तिङः पित्संज्ञाविज्ञानादपि तिङ्दुर्लभ इति वाच्यम्। तिङ्संज्ञाविधावौपदेशिकपित्वस्य सामर्थ्येनाश्रयणात्सार्वधातुकप्रदेशे तु पिद्ग्रहणमेवास्तु। किञ्च अपिद्ग्रहणमसंयोगाल्लिट्किदित्युत्तरार्थमपि वाच्यम्। पिदार्द्धधातुकयोरिति तु पिति ङितीति निषेधादौपदेशिकापित्स्वेव प्रवर्त्तते न दोषः कोश्चिदिति चेत् प्रदेशेषु पित्पदेन कृत्रिमस्यैव ग्रहणेनाभ्यस्तस्याचि पिति इति निर्देशे ऽपि इत्संज्ञको यः पिदौपदेशिक इत्यर्थस्यावश्यकत्वेऽपि शास्त्रे उभयगतितिज्ञाना त्तस्यानुदात्तेङ्दिुदुपदेशाल्लसार्वधातुकमिति पिदित्युच्यमाने एव श्नुचोः पिति रुदादिभ्यः पिति तु रुस्तुसम् समः पिति यक् पिति अकृत् पितो दीर्घ इत्यादौ संदेहापत्तेरेव स्यात् कृत्रिमपितो ग्रहणे सत्यपि चत् ङीत्वस्यैवाभावे सुप्तिङन्तस्येति पदत्वानापत्तिस्तथा च रुदिहीत्यादौ तिङ्ङतिङ इति निघांतानापत्तिः उभयोः संज्ञासंज्ञयोर्ग्रहणं पूर्वएवेत्युक्तम्। अथ पित्संज्ञा न क्रि-

यते सार्वधातुकमदशषु मंज्ञिनिर्देशोऽस्तु तिङ् शिदितिसार्वधातुकसंज्ञायान्तु तिङशशब्दादार्द्धधातुकयोरित्यादिआर्द्धधातुकतिङ्शिदिति वक्तव्यम् लिट् चेति वचनाल्लिङादेशस्तिङामार्द्धधातुकत्त्वं यत्र शितो ऽसम्भव स्तत्र तिङ्ग्रहणमेव सार्वधातुकस्थले कार्यं सार्वधातुकमपिदितिङ्शिदपिदितिवक्तव्यम् तिङ शितियगित्यत्र धातोरित्युच्चार्यविहितातिङ्शितियग्विधानाल्लिहो दुह इत्यादौ कर्म्मे शसि न दोषः शिदार्द्धधातुकयोरित्यत्रार्द्धधातुकसाह चर्यादूव्रीहीनित्यादौ न गुणः अपितः शितो ऽङित्वे च घेर्ङितीति गुणो दुर्वार इति वाच्यम् ॥ एवन्तर्हि धातोस्तिङः शिदपिदिति वक्तव्यम तिहितविशेषणत्वाददोष इति केचिद्वदन्ति २९ इदुदुपधस्य चाप्रत्ययस्य अत्र मूले एकादेशशास्त्रनिमित्तविसर्गस्थाने ऽनेन सूत्रेण न षः कस्कादिपु भ्रातुः पुत्रस्य पाठादिति अत्र पूर्वपक्षः षत्वतुकोरसिद्ध इति षत्वे कर्त्तव्ये एकादेशस्यासिद्धत्वादिदुदुपधस्येत्यस्याप्रवृत्तेः कस्कादिपु पाठसामर्थ्यात्षत्वमिति मातुः कृपेत्यादौ शङ्कैव नास्तीति तन्न। पदान्तपदाद्योरेकादेशस्यैवासिद्धत्वमिति भाष्यसिद्धान्तात् तेन ज्ञापकत्वं सम्यगेव तेन परिवीषु परिजीषु इत्यादौ षत्वमिति ज्याव्येञ्भ्यां क्विपि ग्रहिज्येति सम्प्रसारणे पूर्वरूपे हल इति दीर्घे आदेशप्रत्यययोरिति सुपः सस्य षत्वे कर्त्तव्ये पदान्तपदाद्योरेकादेशाभावात् पूर्वरूपस्य नासिद्धत्वमन्यथा ऽकारेण व्यवधानादिणः परत्वाभावात्सस्य षत्वं न स्यात् यथा वृक्षेच्छत्रमित्यत्रापि सिद्ध एकादेश इति च्छे चेति तुक् न। वस्तुतस्तु इग्यणः सम्प्रसारणमित्यत्र साचः सम्प्रसारणमित्येव सूत्रमस्तु सम्प्रसारणाच्चेति मास्तु वृक्षेच्छत्रमजयेच्छत्रमित्यत्र तुङ्निवृत्त्यर्थषत्वे तुकि पदान्तपदाद्योरेकादेशो ऽसिद्ध इति नियमः स्वीकार्यः एवञ्च भ्रातुःपुत्र

शब्दः कस्कादिषु विध्यर्थ एव न ज्ञापक इति समाधानं विभावयन्तु सुधिय इति पण्डिताः । वस्तुतस्तु वृक्षेच्छत्रमित्यादावसिद्धत्वे पदान्ताद्वेति नियमं विना न सिध्येदतो नियमोऽयमावश्यक एतन्नियमाश्रयणात्सम्प्रसारणङीषु सु सिद्ध एकादशइतिवक्तव्यमिति वार्तिकं कर्त्तव्यं भवति शकहूषु परिवीषु वृक्षेच्छत्रम् अजपेच्छत्रम इति वार्तिकोदाहरणानि नियमे एव सिध्यन्ति अत्र नियमे शङ्कितं भाष्ये यदि पदान्तपदाद्योरेकादेशोऽसिद्धस्तर्हि ओषधौपूधीत्यत्रासिद्धत्वाभावे षत्वं प्राप्नोति शसि पूर्वसवर्णदीर्घे सस्य रुत्वं विसर्गः कः कुत इति कुप्विकृतेष्वनिदितेरिति सत्वे तत्र समाहितं भाष्यकारेणैव कस्कादिषु भ्रातुः पुत्रस्य पाठादेशात्परस्य न षत्वमिति ज्ञापकस्य सजातीयापेक्षया कुप्वोः परत एव न षत्वं तेनशकहूषु परिवीष्वित्यादावदोषः षत्वतुकोरसिद्ध इत्यत्र पूर्वपदान्तपरपदाद्योरेकादेशोऽसिद्ध इति व्याख्यातं तत्रैव भाष्ये तेन पदान्तपदाद्योरिति नियमे सिद्धे सिद्धं वृत्रहच्छत्रमित्यादिपदशब्देन पदयोग्योऽपि गृह्यते अधीत्यप्रेत्येति भाष्योदाहरणात् परिविपूर्वस्येणः क्विबन्तस्य तुगभावः परिवीयेति ल्यबन्ते च न तुक् अनभिधानात् तदुक्तं प्रत्ययलक्षणमित्यत्र भाष्ये वक्ष्यति अत्र परिहारं इहापि परिवि-प्रत्ययलक्षणमित्यत्र भाष्ये वक्ष्यति अत्र परिहारं इहापि परिविरिति शास्त्रपरविप्रतिषेधेन परत्वाद्दीर्घत्वं भविष्यतीति आशयमाह कैयटः सति प्रत्यये यत्कार्य्यं भवति तल्लुप्तेऽपि भवतीति सूत्रार्थः परिवीयेत्यादौ च सति प्रत्यये दीर्घो दृष्टोऽन तुगिति परिवीरित्यत्रापि दीर्घ एव भवतीति एतेनाधीत्य प्रेत्येत्यत्र तु दीर्घौ दृष्टौ तेनात्र तुक्यसिद्ध इति युक्तैव अत एव औषधीत्यत्राद्धित्वान्न ष इति भाष्ययोरविरोध इति केचित्

३० आडजादीनाम् न चाजादीनामपिंलङ्लुङ लृङ् क्ष्वित्यडेवास्तु किमनेन सूत्रेण आटश्चेति अटश्चेत्येवास्तु अश्वपो हसन्नित्यत्राङ्गार्ग्यगालवयोरिति स्वपो ऽडागमे वृद्धिस्तु न अटश्चेत्यत्रोपसर्गादृतिधातावित्यतो धातावित्यपकृष्य तेन धात्ववयवे ऽच्यव वृद्धिरिति न दोषः आणूनद्या इत्यत्र तु अडिति वक्तुमशक्यः बहुश्रेयस्यै पत्यै इत्यादौ वृद्धिबाधकमतो गुण इति पररूपं माभूदिति अड्विधानन्तु बहुश्रेयस्यामित्यादौ नुडबाधनेन चरितार्थमटश्चेति धात्ववयवे ऽच्येव प्रवर्तते आटि सति तु वृद्धिरेचीति वृद्धिरित्याटश्चेति सूत्रस्थशेखरग्रन्थः अद्धातोशेखरे तु अटश्चेत्येवास्तु आतीदैधतेत्यादौ तु न दोषः अतो गुणे नाट इति न्यासेन सिद्धत्वात् । एवञ्च बहुश्रेयस्यै इत्यादावटश्चेति वृद्धिं विधाय पररूपबाधकमुभयथा बहुश्रेयस्यै इत्यादौ पररूपं स्यादेव आणूनद्या इत्युक्ते स्याद्याटोर्दीर्घान्तत्वान्नास्ति पररूपशङ्का तथापि पररूपं परत्वात्स्याद्बहुश्रेयस्यै इत्यादौ तदर्थमाणूनद्या इतिवक्तव्यमटश्चेति चकारेण पुनर्वृद्धिविधानं बाधकबाधनार्थं तेनार्थेनैवाटः पररूपमात्रं न इति न्यासे ऽपि तदेव ओमाङोरुसीति न वक्तव्यमिति भाष्योक्तेरुभयथा उस्योमाङ्क्ष्वाट इति नारम्भणीयमिति पण्डिताः । माङ् योगे इति सूत्रेआडजादीनामिति प्रत्याख्यानपरभाष्यं तु ।

अजादीनामटा सिद्धे वृद्ध्यर्थमिति चेदटः ।
अश्वपो हसती त्यत्र धातौ वृद्धिमटः स्मरेत् ।

कथमिति चेद्योगविभागःकरिष्यते अटः अचिः वृद्धिर्भवति ततः उपसर्गादृति वृद्धिर्भवति ततो धातावित्युभयोः शेषः अतो भष्याच्चकारप्रत्याख्यानं स्पष्टमायाति आटीदित्यादौ पररूपमाशङ्क्योक्तं पररूपं गुणेनाट इति अनेनैव सिद्ध उस्यो माङिति न

वक्तव्यंभवतीति सदो माङोरुसि तत्समामिति वहुश्रेयस्यै इत्यादौ वृद्धिस्तु इति से पररूपे निषिद्धे प्रतिबन्धकाभावाद्वृद्धिरेचीत्येव अत्र पक्षे आणूनद्या इति वक्तुं शक्यः अटश्चेतिचकार ओमाङोश्चेति चकार उस्योमाङिति पररूपनिषेधार्थं च वार्तिकं नाश्रयणीयं भवति अटश्चेत्यत्र भाष्यरीत्या तु आट इति वक्तुश्चकारेण पररूपवारणे सिद्धे उस्योमाङिति न कर्त्तव्यं धात्वपकर्षणाटश्चेत्यस्यापकर्षणाप्राप्त्या आणूनद्या इति दीर्घो च्चारणमावश्यकं वृद्धिरेचीति बाधित्वा पररूपापत्तेः । न चाड्विधानसामर्थ्यात्पररूपाभावः शङ्क्यः आणूनद्या इति वक्तव्यं नाड् इति गौरवान्न कर्त्तव्यमित्याह केचित्तु वा सुप्यापिशलेरित्यत्रापिशलिग्रहणेनैव सिद्धे वा ग्रहणमट इत्यत्रानुवृत्त्यर्थम्व्यवस्थितविभाषार्थं तेनास्वपो हसन् वहुश्रेयस्यै इत्यादिसिद्धं धात्वपकर्षो वृद्ध्यर्थं चकारकरणं दीर्घोच्चारणमाट इति न कर्तव्यमेव एवञ्चाट्स्याटोर्दीर्घोच्चारणमाणूनद्या इत्यत्र दीर्घोच्चारणमप्यनावश्यकमेव व्यवस्थितविभाषया सिद्धेः यद्वा शरावयवाङ्गुल्यादौ हस्तपादाङ्गुलिरित्यादिरूढव्यवहाराद्याटस्याटोष्टकारोकारस्याप्यवयवइत्यट इति वृद्धिः सिद्धैवेत्याहुः न चाडजादीनामिति छन्दसि हलन्ते अपुनहृआवित्यादौ दीर्घार्थमिति वाच्यम् । छन्दोर्थे वहुलं दीर्घो दृश्यते तद्यथा पुरुषो नाह इति भाष्ये समाधानात् । न चेणस्त्योर्लेङि ञ्णौ इणोयणिति यणि श्नसोरल्लोपे अटि आयन्नासन्निति न सिध्येदिति वच्यम् । इणस्त्योरन्तरङ्गतः इडागमेऽट इति वृद्धौ नास्ति दोषः इणो यणित्यत्रैरनेकाच इत्यत एरित्यपकृष्टः श्नसोरल्लोप इत्यत्रादिति तपरकरणात् पश्चाद्यणलोपयोरप्राप्तेनचागमेऽपि वार्णादाङ्गमिति न्यायात्प्रागेव यणलोपौ प्राप्नुतः इत्याद्वचनमिति वाच्यम् । इणस्त्योरन्तरङ्गतइति भा-

ष्याच्छ्वोः शूडिति स तु क्वनिर्देशाच्चेयमनित्या ऽन्यथा गत्वा च्छस्य शादेशे तुको ऽप्राप्त्या सनिर्देशो व्यर्थस्स्यादिति भाष्ये ध्वनितम् ३१ भूवादयोधातवः क्रियावाचिनः किम् याः पश्यति न चास्य वाशब्दस्य लाक्षणिकत्वान्न धातुसंज्ञेति वाच्यम् भ्वादिषु लाक्षणिकानामपि अश्वत्यादीनां दर्शनेनैतद्विषये तत्परिभाषाया ऽप्रवृत्तेः नकारजावनुस्वारपञ्चमौ झलि धातुषु शकारजस्सकारश्चेषात्टवर्गस्तवर्गज इत्यभियुक्तोक्तेरिति मनोरमोपरि शब्दरत्नग्रन्थः अत्रायं पूर्वपक्षः धातुसंज्ञाम्प्रति अनुस्वारसवर्णादीनामासिद्धत्वेन प्रतिपदोक्तस्यैवासम्भवे न लाक्षणिकपरिभाषया पशयतीत्यत्र दोष इतिशब्दरत्नग्रन्थो ऽसङ्गतः किञ्च क्रियावाचिनः किमित्यस्य वाकरोति वाभवतीत्येव प्रत्युदाहरणं सम्भवति वा शब्दस्य धातुत्वे ऽधातुरितिनिषेधात्प्रातिपदिकत्वाभावे सुपोऽनुत्पत्त्या पदत्वाभावातिङ्ऽतिङ इति निघातो न स्यात् अत्र समाधानम् अर्थवत्सूत्रे ऽधातुग्रहणस्य त्यागेन वा करोतीत्यावदोषः न चाहन्नित्यस्यापि प्रातिपदिकत्वेन लोपापत्तिरिति वाच्यम् । न लोपो ऽतिङ इति न्यासेन वारणात् राजीयतीत्यादौ तु न दोषः प्रत्यासत्त्या तिङन्तानिरूपितं यस्य पदत्वं तन्निमित्तात्परस्य लोप इत्यर्थाद्रामानित्यादौ तु नलोपो न अन्यथा तस्माच्छसो लोपः इत्येव ब्रूयादिति पण्डिताः । वस्तुतस्तु वाशब्दे निपातसंज्ञाप्राप्ता धातुसंज्ञाया बाधिका भविष्यति धातुसंज्ञा भवतीत्यादौ चरितार्था निपातसंज्ञा चाह प्रप्रतिषु चरितार्था वाशब्दस्य परत्वान्निपातसंज्ञैव या परा ऽनवकाशा चेत्याकडारादेकेत्यत्र सूत्रे ऊकालसूत्रे च भाष्ये प्रसिद्धत्वात् अन्तरङ्गत्वं तु भ्वादिवादिगणसापेक्षत्वेनोभयोः संज्ञयो सममेव गणोपस्थितशब्दबाहुल्येन व-

हिरङ्गता तु धातुसंज्ञाया एव भुवश्च महाव्याहृतेरित्यत्र महाव्याहृति ग्रहणात् यावत्पुरानिपातयोरित्यत्र निपातग्रहणाच्च निपाते प्रतिपदोक्तव्यवस्थेति मनोरमादिग्रन्थकाराशयः। प्रातिपदिकसंज्ञाया निपातसंज्ञा बाधिकैवाविरोधात् निपातः प्रातिपदिकमिति विशेषवचानात् रामानित्यादौ सस्य लोपस्तु न कृतः सस्य नत्वे नलोप तस्यासिद्धत्वाद्राममासयतीत्यादौ दीर्घाभावे तुको भावार्थत्वात्तस्येति अथ धातुग्रहणप्रत्याख्याने यद्याग्रहस्तवास्ति चेत्तर्हीत्थं न्यस्यतां नलोपः प्रातिपदिकान्तस्येति तावतापि मात्राद्वयलाघवादिति तत्वप्रकाशिकायां स्पष्टम् ३२ अचःपरस्मिन्पूर्वविधौ अत्र शेखरः अत्र सूत्रे प्रयोगेऽचस्थानिक इत्यर्थो न तु सूत्रे स्थानित्वेनोद्देश्यताचस्थानिक इत्यर्थस्तेन णिलोपादेरनेन स्थानिवत्वं सिध्यति अत एव चङ्परनिहासे ण्यन्ताणिचि अवीभवदित्यादिसिध्यर्थो निषेधः सार्थकः इति जुहुव इत्यत्र शेखरोक्तप्रयोगः परनिपित्तकत्वाभावे ऽपि शपः परनिमित्तत्वेन परम्परया लोपनिमितत्वेन स्थानितया ऽत्रादेशस्याभावेन स्थानिवत्वाभावाच्छ्वत्वमाश्रित्य न गुण इत्युक्तम् तत्पूर्वापरविरुद्धम् वस्तुतो ऽकारस्यैव श्लुत्वेन स्थानिवत्वस्य दुर्वारत्वादिति पण्डिताः तत्रेत्थं विरोधपरिहारः साक्षात्परनिमित्तकता तत्र प्रायोगिकस्थानिता परम्मरया प्राप्तायां सौत्रस्थानितेति एवमेव हि प्रयोगाणां गतिर्भवति नान्यथेति वोध्यम्। यत्तु ञेरित्यत्र स्थानिपत्वेन उपात्ताचस्थानिसत्त्वाच्चङ्परनिह्रासे इति वचनं वारि आख्यादवीव इत्यादौ चरितार्थमतः सूत्रे एवाच्स्थानिक इत्युक्ते सर्वेष्टसिद्धि रित्युक्तम्। तन्न। टिपदेनाच एव ग्रहणादत्रादेशाभावेनादोषात् अत एव मरुतमाचष्टे मारयतीति वृद्धौ कृतायां न स्थानिवद्भाव इति दिक् ३३ इत्युत्तरपक्षावली समाप्ता।

# सूचीपत्रः ।

| | | रु.आ.पा. |
|---|---|---|
| १ | परिभाषेन्दुशेखरः । भैरवीव्याख्यासमेतः । ... | १-०-० |
| २ | अर्थसंग्रहः । सटीकः ( मीमांसा ) ... ... | १-०-० |
| ३ | षड्दर्शन मूलमात्र एकत्र ... ... ... | १-०-० |
| ४ | पदार्थदीपिका ( न्यायः ) ... ... ... | ०-८-० |
| ५ | भाट्टभाषा । प्रकाशसहिता ( मीमांसा ) ... | ०-८-० |
| ६ | प्रश्नवैष्णवः ( ज्योतिषः ) ... ... ... | ०-४-० |
| ७ | प्राकृतप्रकाशः । वररुचिकृत सूत्राणां भामहकृतव्याख्या | ०-८-० |
| ८ | वृद्धिदीपिका ( धर्मशास्त्रम् आशौचकाण्डम् ) ... | ०-२-० |
| ९ | धातुपाठः । ... ... ... ... | ०-२-० |
| १० | भगवद्गीता । मधुसूदनटीका सहिता । ... | २-०-० |
| ११ | व्युत्पत्तिवादः । मूलम् ... ... ... | १-८-० |
| १२ | भैरवी । शब्दरत्नव्याख्या ( कारकान्ता ) ... | २-८-० |
| १३ | परमलघुमञ्जूषा । ... ... ... | ०-४-० |
| १४ | लघुशब्देन्दुशेखरः सम्पूर्णः । ... ... | ४-०-० |
| १५ | लघुशब्देन्दुशेखरोऽव्ययीभावान्तः । ... | १-०-० |
| १६ | मनोरमा शब्दरत्नसहिता सम्पूर्णा ... ... | ५-०-० |
| १७ | मनोरमा शब्दरत्नसहिताऽव्ययीभावान्ता । ... | १-८-० |
| १८ | किरात ३ सर्ग । ... ... ... ... | ०-४-० |
| १९ | साङ्ख्यतत्त्वकौमुदी । ... ... ... | ०-६-० |
| २० | नारदसंहिता ( ज्योतिषम् ) ।... ... ... | ०-६-० |
| २१ | मेदिनीकोषः । ... ... ... ... | ०-१२-० |
| २२ | शास्त्रसिद्धान्तलेस पत्रात्मक ... ... ... | २-०-० |
| २३ | उत्तरपक्षावली । ... ... ... ... | ०-२-० |
| २४ | मीमांसापरिभाषा । ... ... ... ... | ०-४-० |
| २५ | कारिकावली । राम० दिन० मुक्ता० स० शब्दखण्डान्ता | ३-०-० |
| २६ | कालीशङ्करी जगदीश्याः पञ्चलक्षण्याः । ... | ०-२-० |
| २७ | सैव—माथुरी पञ्चलक्षण्याः । ... ... | ०-२-० |
| २८ | परिभाषापाठः । ... ... ... ... | ०-०-६ |

पत्रादिप्रेषणस्थानम्—हरिदासगुप्तः—कार्याध्यक्षः
चौखम्बा संस्कृत सीरीजकार्यालय-बनारससिटि ।

